
Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!




SUPER
RUBBER










THE



# चन्दमामा

जुलै - १९९४

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४.००

वार्षिकं ग्राहकशुल्कं रू. ४८.००

# च न्द मा मा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'





## शिक्षणक्षेत्रे परिवर्तनम्

एषु दिनेषु एतस्याम् एव पत्रिकायां काचित् वार्ता प्रकाशिता आसीत् यत् चीनदेशे पुत्रान् शालां प्रेषयितुम् असमर्थौ माता-पितरौ दण्ड्येते इति । चीनदेशस्य एतस्य व्यवहारस्य अनुकरणं वा न वा इति न जानीमः, भारतस्य केषुचित् राज्येषु एतादृशस्य एव दण्डनक्रमस्य अन्वयार्थं चिन्तनं कुर्वन्तः सन्ति इति श्रूयते ।

स्वतन्त्रभारतस्य संविधानस्य निर्माणसमये संविधानरचना-समित्या चिन्तितम् आसीत् यत् निश्शुल्कशिक्षणप्राप्तिः बालानाम् अधिकारः स्यात् इति । किन्तु अन्ते, बालानाम् अनिवार्यशिक्षणं स्यात् इति निर्णयः कृतः । क्वचित् कुटुम्ब-निर्वहणार्थं-बालैः गृहे कार्यस्थले वा मातापित्रोः साहाय्यं करणीयं भवति । पुनः क्वचित् दारिद्र्यकारणतः मातापितरः पुत्रान् विद्यालयं प्रेषयितुं न शक्नुवन्ति । अन्यत्र क्वचित् मातापित्रोः आयस्य वर्धनार्थं बालैः बाल्ये एव उद्योगः आश्रयणीयः भवति । इतरत्र क्वचित् समीपे कुत्रापि शाला न भवति । एतादृशैः बहुविधैः कारणैः बहवः बालाः विद्यालयं गन्तुं न शक्नुवन्ति । एतादृशसमस्यानां परिहारः यावत् न भवति तावत् तादृशानां विद्यालयगमनं कष्टाय एव खलु ?

एषु दिनेषु केन्द्रसर्वकारः, राज्यसर्वकाराः च सम्भूय विद्यालयम् अगच्छतां, मध्ये एव विद्याभ्यासं त्यजतां, बाल्ये एव उद्योगार्थं गच्छतां च बालानां विषये चिन्तनं कृतवन्तः । कैश्चित् राज्यैः निर्णीतं यत् प्राथमिकविद्यालयशिक्षणं निश्शुल्कम् अपरिहार्यं च क्रियते इति । अन्यैः कैश्चित् प्रौढशालाशिक्षणम् अपि निश्शुल्कं स्यादिति निर्णीतम् । एवं बालानां विद्याभ्यासस्य विषये चर्चा प्रचलन्ती अस्ति ।

केचन शिक्षणविदः अभिप्रयन्ति - ''निर्दिष्टे समये बालाः शालाम् आगच्छेयुः इति निरीक्षा एव अनुचिता । मातापित्रोः असामर्थ्यस्य निमित्तं बालानां दण्डनं तु सर्वथा अनुचितम् । विद्यालयाः अधिककालं यावत् - तत्राम सायं रात्रौ चापि आवर्षं - यदि उद्घाटिताः स्युः तर्हि बालाः अनुकूले काले विद्यालयम् आगन्तुं प्रयत्नं कर्तुम् अर्हन्ति'' इति ।

किं शिक्षणक्षेत्रे अपूर्वं परिवर्तनं भवेत् ?


सम्पुटः - ११ जुलै - १९९४ सञ्चिका - ४

प्रतिकृतिमूल्यं रू. ४.०० • वार्षिकं ग्राहकशुल्कं रू. ४८.००




# नामनिर्वचनम्-१४

[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]

**कार्तिकेयः–** कृत्तिकानाम् अपत्यं पुमान् कार्तिकेयः। [कृत्तिका-ढक्] शिवस्य ज्येष्ठः पुत्रः कार्तिकेयः। कृत्तिकामातरः एतं शिवपुत्रं पोषितवत्यः इत्यतः कार्तिकेयः इति तस्य नाम जातम्।

एषा घटना वाल्मीकिरामायणे एवम् उल्लिखिता–

"कुमारश्चाभवत्तत्र तरुणार्कसमद्युतिः।
वह्नितेजोद्भवः श्रीमान् गङ्गाकुक्षिपरिच्युतः।।
ततस्ताः देवताः ऊचुः कार्तिकेय इति प्रभुः।
पुत्रोऽयं जगति ख्यातो भविष्यति न संशयः।।" इति।

**दुर्गा–** दुः=दुःखेन गम्यते प्राप्यते असौ इति, दुर्दुःखेन गम्यते अस्याम् इति वा दुर्गा। [दुः+गम्लृ-(गतौ)+डः] दुःखेन गीयते स्तूयते इति वा दुर्गा। [दुः+गै(शब्दे) +अङ्]सर्वजनैः कष्टेन एषा प्राप्यते इत्यतः एषा 'दुर्गा' इति उच्यते।

**तिलोत्तमा–** तिलैः तिलप्रमाणैः सर्वरत्नानाम् अंशैः उत्तमा। [तिल+उत्तमा] तिलोत्तमा नाम देवलोकस्य सुन्दरी सुराङ्गना। सुन्दोपसुन्द-राक्षसयोः नाशार्थम् एषा ब्रह्मणा सृष्टा आसीत्। तिलोत्तमाशब्दस्य निर्वचनं महाभारते (१/२१२/१७) एवम् उक्तम्–

"तिलं तिलं समानीय रत्नानां यद् विनिर्मिता।
तिलोत्तमेति तत्तस्याः नाम चक्रे पितामहः।।" इति।

**प्रदीपः–** प्रदीपयति इति प्रदीपः। [प्र+दीपी(दीप्तौ)+णिच्+अच्] यः दीपः प्रकर्षेण वस्तूनि दीपयति=प्रकाशयति सः प्रदीपः। अधिकप्रकाशयुक्तः दीपः इति तात्पर्यं वक्तुं शक्यते।

---

सूचना– भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।

सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं ।। फेस्, बेङ्गलूरु-५६००८५.

वार्ताविशेषः -

# नूतनं गणराज्यम् इटली



एवं हि भाति यत् इटलीदेशीयाः जनाः निर्णीतवन्तः स्युः यत् चत्वारिंशद् वर्षाणि शासनं कृतवान् क्रिश्चियन् डेमाक्रटिक्पक्षः वाममार्गीयाः तन्मित्रपक्षीयाः च किञ्चित्कालं विस्मर्तव्याः इति । अतः एव ते वामपक्षेतर-पक्षेभ्यः शासनाधिकारं दत्तवन्तः सन्ति । गते मार्च्मासे २७-२८ दिनाङ्कयोः प्रवृत्ते अतिप्रधाने निर्वाचने शासनपक्षस्य 'क्रिश्चियन् डेमाक्राट्स्' पक्षस्य तन्मित्राणां वामपक्षाणां च अपेक्षया अधिकानि स्थानानि दक्षिणपक्षाः प्राप्तवन्तः । 'फोर्जा इटालिया' पक्षस्य अध्यक्षः सिल्वियो बेर्लुस्कोनिवर्यः ५२ तमं सर्वकारम् अचिरात् एव रूपयिष्यति । एतद्द्वारा देशः पुनरपि गणराज्यव्यवस्थायुक्तः भवेत् इति निरीक्ष्यते तज्ज्ञैः ।

'फोर्जा इटालिया' पक्षेण १५५ स्थानानि, जिया फ्राङ्कोसिन्वर्यस्य नायकत्वेन युक्तेन 'नार्तर्न् अलयन्स्' पक्षेण १०५ स्थानानि, अम्बर्टो बोट् वर्यस्य नायकत्वेन युक्तेन 'नार्तर्न् लीग्' पक्षेण १०६ स्थानानि च प्राप्तानि । एते त्रयः अपि पक्षाः दक्षिणमार्गानुयायिनः । त्रिभिः सम्भूय ६३० स्थानात्मिकायां लोकसभायां राज्यसभायां च ५८% स्थानानि एतैः प्राप्तानि । सर्वकाररचनार्थम् आवश्यकं बहुमतं तु एतैः प्राप्तम् एव । कम्यूनिस्ट्पक्षेण तन्मित्रपक्षैः च आहत्य ३४% स्थानानि एव प्राप्तानि आसन् ।

बहुमतं प्राप्तवद्भिः त्रिभिः अपि पक्षैः निर्णीतं यत् गणराज्यव्यवस्थां पुनरानेतुं संविधाने यद्यत् परिवर्तनं करणीयं भवति तत्सर्वं करिष्यामः वयम् इति । एतदर्थं ते प्रजाभिप्रायसङ्ग्रहणम् अपि करिष्यन्ति । गणराज्यपद्धत्यनुगुणम् अध्यक्षं प्रजाः एव चिन्वन्ति । प्रधानमन्त्रिचयनं तु लोकसभया क्रियते ।

इटलीदेशस्य एकस्मिन् पार्श्वे आड्रियाटिक्समुद्रः अस्ति । अपरस्मिन् पार्श्वे अयोनियन्समुद्रः अस्ति । तृतीयपार्श्वे मध्यधरासमुद्रः अस्ति । एवं त्रिषु पार्श्वेषु समुद्रेण आवृतः द्वीपः एषः देशः । सिसिलि-सार्डियाप्रभृतयः द्वीपाः अपि इटलीदेशीयाः एव ।

इतिहासात् ज्ञायते यत् क्रि.पू. ५१० तः क्रि.पू. २७ यावत् एषः देशः रोमन्गणराज्येन पालितः आसीत् इति । क्रि.पू. २७ तः क्रि.श. ४७६ पर्यन्तं रोमन्साम्राज्यं यत् प्रवृत्तं तस्य सूत्रधारः आसीत् जूलियस् सीसर्वर्यः ।

रोमन्साम्राज्यस्य पतनस्य अनन्तरम् अत्र बहवः दुराक्रमणं कृतवन्तः । १६ - १७ शतकयोः इटलीदेशस्य अधिकभागः स्पेन्देशस्य अधीनः आसीत् । ततः आस्ट्रियादेशः, तदनन्तरं फ्रान्स्देशश्च अत्र शासनं कृतवन्तौ । यदा फ्रान्स्सम्राट् नेपोलियन् वाटर्लू १८१५ तमे वर्षे युद्धे पराजयं प्राप्नोत् तदा ऐक्य-स्वातन्त्र्ययोः विचारः अत्र विशेषतः प्रवृद्धः । १८८० तमे वर्षे एषः देशः स्वतन्त्रः जातः ।

प्रथमजागतिकयुद्धस्य (१९१४ - १९१८) अनन्तरं 'मुसलोनी'वर्यः 'फासिज्' नामकम् आन्दोलनम् आरब्धवान् । वर्षत्रयाभ्यन्तरे प्रधानमन्त्री जातः च । सः सर्वाधिकारी आसीत् । अतः सः समानशीलस्य सर्वाधिकारिणः हिट्लर्वर्यस्य मैत्रीं सम्पादितवान् । एषा मैत्री द्वीतीयजागतिकयुद्धस्य कारणं जाता । १९४३ तमे वर्षे मुसलोनी प्रधानमन्त्रिपदात् च्युतः अभवत् । यदा सः देशात् पलायमानः आसीत् तदा जनैः मारितः ।

१९४६ तमे वर्षे इटलीदेशः गणतन्त्रप्रधानः जातः । किन्तु आर्थिकसमस्यानां कारणतः राजनीतिक्षेत्रे निरन्तरम् अस्थिरता अनुवृत्ता । ४५ वर्षेषु ५२ सर्वकाराः तत्र रचिताः आसन् । केचन सर्वकाराः तु केवलं द्वित्राणि दिनानि अजीवन् ।

ततः आगतेन शासकपक्षेण विरोधि- पक्षीयेभ्यः अपि सचिवसम्पुटे स्थानानि दत्तानि । एतेन स्थितिः पुनरपि शोचनीयतां गता । देशे अनीतिः भ्रष्टाचारः इत्यादयः नितरां प्रवृद्धाः । एतस्मात् जनाः नितरां खिन्नाः जाताः ।




एतदर्थं जनैः परिवर्तनम् इष्टम् । अतः तैः दक्षिणमार्गानुयायिभ्यः अधिकारः दत्तः अस्ति । प्रधानः पक्षः 'फोर्जा इटालिया' मासत्रयात् पूर्वम् उत्पन्नः । एतस्य पक्षस्य नेता ५७ वर्षीयः बेर्लुस्कानिवर्यः कस्यचन दूरदर्शनजालस्य स्वामी अस्ति । प्रकाशन-संस्थायाः स्वामी अपि एषः इदानीं प्रपञ्चे स्थितेषु महाधनिकेषु अन्यतमः अस्ति । जनाः एतम् 'आधुनिकः सीसर्' इति वर्णयन्ति ।



# शिष्यत्वार्हता

सीतापुरवासिनः विश्वनाथस्य त्रयः पुत्राः। ज्येष्ठः कृषिकार्यं करोति स्म। द्वितीयः वाणिज्यवृत्तिम् आश्रितवान् आसीत्। तृतीयः जगन्नाथः कस्याञ्चित् अपि वृत्तौ आसक्तिम् अप्रदर्शयन् गृहे अपि अतिष्ठन् ग्रामे अटति स्म। एतत् दृष्टवतः विश्वनाथस्य महान् खेदः भवति स्म।

जगन्नाथः अलसः वृथाकालयापकः वा न। उत्तमानां कार्याणां निमित्तम् एव तदीयः समयः व्ययितः भवति स्म। यदि कस्यचित् गृहे शुभकार्यं निश्चितं स्यात् तर्हि जगन्नाथः तत्र उपस्थाय सर्वविधेषु अपि कार्येषु साहाय्यं कुर्वन् ग्रामीणान् उपकरोति स्म। दश कर्मकराः तदधीनाः कृताः चेदपि सः कस्यापि कर्मकरस्य खेदः यथा न स्यात् तथा व्यवहरन् कर्मकराणां द्वारा अधिकं कार्यं कारयति स्म। कृपणात् अपि धनसङ्ग्रहे तस्य सामर्थ्यम् आसीत्। कठोरमनस्कस्यापि हृदये करुणाम् उत्पादयितुं शक्नोति स्म सः। अतः सर्वे तं वदन्ति स्म यत् 'भवान् व्यवहारज्ञः' इति।

पार्श्वस्थे ग्रामे विश्वनाथस्य दूरबन्धुः गङ्गाधरः निवसति स्म। गङ्गाधरस्य इच्छा आसीत् यत् जगन्नाथाय स्वपुत्री विशालाक्षी दातव्या इति। गङ्गाधरस्य एताम् अपेक्षां ज्ञात्वा उक्तवान् विश्वनाथः - ''मम पुत्रः यावत् अप्रयोजकः तिष्ठति तावत् तस्य विवाहं न करोमि अहम्। यदि विवाहः क्रियेत तर्हि तस्य पत्न्याः पोषणभारः मया एव निर्वोढव्यः स्यात्'' इति।

तदा गङ्गाधरः उक्तवान् - ''भवान् प्रायः न जानाति यत् जगन्नाथः विशेषतः व्यवहारज्ञाननिपुणः इति। यदि तं वेदवनस्थस्य श्रद्धानन्दस्य शिष्यं कुर्याम तर्हि अल्पे एव काले उत्तमं शिक्षणं प्राप्य सः राजास्थाने एव उद्योगं प्राप्तुं शक्नुयात्'' इति।



श्रद्धानन्दस्य नाम विश्वनाथेन अपि श्रुतम् आसीत्। श्रद्धानन्दः सर्वान् शिष्यत्वेन न स्वीकरोति स्म। ये शिष्यत्वम् इच्छन्ति तादृशानां परीक्षां कृत्वा उत्तीर्णान् शिष्यत्वेन स्वीकरोति स्म सः। अथवा ये प्रभूतं धनं यच्छन्ति तादृशान् अपि कांश्चित् शिष्यत्वेन स्वीकरोति स्म सः।

गङ्गाधरस्य वचनं श्रुत्वा विश्वनाथः निश्चितवान् यत् मम पुत्रः जगन्नाथः वेदवनं प्रति प्रेषणीयः इति। अतः सः तस्मिन् एव दिने वेदवनं गत्वा श्रद्धानन्दं दृष्ट्वा स्वपुत्रस्य विषयं विस्तरेण निवेदितवान्।

"भवतः कथनात् ज्ञायते यत् भवदीयः पुत्रः व्यवहारज्ञाननिपुणः अस्ति इति। तथापि कमपि अपरीक्ष्य अहं शिष्यत्वेन न अङ्गीकरिष्यामि। यः मया आयोज्यमानायां परीक्षायाम् उत्तीर्णः भवति सः एव शिष्यः भवितुम् अर्हति। अथवा भवान् प्रतिवर्षं द्विसहस्रं रूप्यकाणि ददाति चेदपि भवतः पुत्रं शिष्यत्वेन अङ्गीकुर्याम्। किन्तु भवतः पुत्रस्य विद्याभ्यासः कदा समाप्यते इति अहं वक्तुं न शक्नोमि। पुत्रस्य सामर्थ्यस्य अनुगुणं विद्याभ्यासस्य अवधिः निश्चितः भविष्यति" इति उक्तवान् श्रद्धानन्दः।

तदा विश्वनाथः झटिति द्विसहस्रं रूप्यकाणि श्रद्धानन्दस्य पुरतः स्थापयन् - "श्रीमन्! जगन्नाथस्य काऽपि परीक्षा करणीया नास्ति। प्रतिवर्षम् अहं द्विसहस्रं रूप्यकाणि भवते अर्पयिष्यामि। अतः मम पुत्रं शिष्यत्वेन स्वीकरोतु" इति उक्त्वा गृहं गत्वा पुत्रं दृष्ट्वा प्रवृत्तं समग्रं निवेदितवान्।

पितुः व्यवहारेण सन्तोषम् अप्राप्नुवन् अपि जगन्नाथः वेदवनं गत्वा श्रद्धानन्दं दृष्ट्वा - "गुरुवर्य! मां भवच्छिष्यं कर्तुं मम पिता भवते द्विसहस्रं रूप्यकाणि दत्तवान् इति श्रूयते। किन्तु मम इच्छा यत् स्व-सामर्थ्येन एव मया भवच्छिष्यत्वं प्राप्तव्यम् इति। अतः अहं सविनयं प्रार्थयामि यत् मम परीक्षां करोतु" इति उक्तवान्।

"भवतः परीक्षणे मम आक्षेपः कोऽपि नास्ति। किन्तु भवतः पितुः, मम च मध्ये कश्चन सन्धिः जातः अस्ति। भवता मम परीक्षायाम् उत्तीर्णता प्राप्ता चेदपि भवतः पित्रा प्रतिवर्षं धनं दातव्यम् एव" इति उक्तवान् श्रद्धानन्दः।

"अस्तु नाम । स्वप्रतिभायाः आधारेण एव मया शिष्यत्वं प्राप्येत" इति वदन् जगन्नाथः परिक्षार्थं सिद्धः जातः । ततः श्रद्धानन्दः तं विविधान् प्रश्नान् कृतवान् । सर्वेषाम् अपि योग्यम् उत्तरं प्राप्य सः उक्तवान् - "समर्थः अस्ति भवान् । अल्पे एव काले विशेषनैपुण्यं प्राप्य भवान् प्रसिद्धिं प्राप्स्यति" इति ।

ततः षट् मासाः अतीताः । तदभ्यन्तरे जगन्नाथः श्रद्धानन्दस्य गुरुकुले निवसतां सर्वेषां विद्यार्थिनां प्रियः जातः । मेधातिथिनामके तु जगन्नाथस्य विशेषस्नेहः आसीत् ।

मेधातिथिः जगन्नाथस्य बुद्धेः तीक्ष्णतां दृष्ट्वा पृच्छति स्म - "भवान् बहून् विषयान् जानाति खलु ? एते सर्वे विषयाः गुरुणा कदा बोधिताः ?" इति ।

"मया ये विषयाः ज्ञाताः तेषु बहवः जिज्ञासाप्रवृत्त्या सम्पादिताः । ते गुरुणा बोधिताः न" इति उत्तरं दत्तवान् जगन्नाथः । किन्तु एतस्मिन् वचने मेधातिथेः विश्वासः न आसीत् ।

'प्रतिवर्षं पञ्चशतं रूप्यकाणि दीयन्ते' इत्येतं सन्धिम् अङ्गीकृत्य मेधातिथेः पिता पुत्रं श्रद्धानन्दसमीपं प्रेषितवान् आसीत् । 'मम पित्रा अधिकं धनं न दीयते इत्यतः श्रद्धानन्दः पक्षपातबुद्धिम् आचरति' इति चिन्तनम् आसीत् मेधातिथेः ।

एतादृशं चिन्तनं तत्रत्येषु बहुषु छात्रेषु अस्ति इति सूक्ष्मावलोकनात् ज्ञातवान्



जगन्नाथः । यैः धनं किञ्चिदपि न दीयते तादृशानां मनसि एषा भावना तीव्रा आसीत् ।

अन्यच्च श्रद्धानन्दस्य पाठनक्रमः अपि विचित्रः एव आसीत् । जीवनोपयोगिनः बहून् विषयान् सः अतिसमीचीनतया बोधयति स्म इति तु सत्यम् एव । किन्तु कदापि प्रत्यक्षशिक्षणं तु सः न ददाति स्म ।

सः आसने उपविश्य पर्वतारोहणं, तरणं, मल्लयुद्धम् इत्येतादृशान् विषयान् आधारीकृत्य बोधनं करोति स्म । पर्वतानां स्वरूपस्वभावादयः,जलप्रवाहानां लक्षणानि, मानवशरीरे अवयवसंस्थानम् इत्यादीनां विषये सुसूक्ष्मं निर्दुष्टं च विवरणं करोति स्म सः । किन्तु कदापि सः छात्रान् पर्वतसमीपं



नदीसमीपं, मल्लाङ्गणं वा न नयति स्म सः। आश्रमात् तस्य बहिर्गमनम् एव विरलम् आसीत्।

'एतादृशात् आचार्यात् कीदृशं ज्ञानं प्राप्येत मया' इति विचारः जगन्नाथस्य मनसि अपि तदा तदा भवति स्म। तथापि सः गुरुणा बोध्यमानेषु विषयेषु अश्रद्धां तु न प्रदर्शयति स्म।

अत्रान्तरे श्रद्धानन्देन पाकशास्त्रविषये बोधनम् आरब्धम्। विविधानां खाद्यानां निर्माणकर्म, तेषां खादनतः जायमानान् गुणदोषादीन्, तत्तद्द्रव्यस्य वैशिष्ट्यम्, औषधीयसस्यानाम् उपयोगम्, एतादृशान् अन्यान् अपि विषयान् सः बोधितवान्। रुचिकरस्य पाकस्य विषये गुरुकुले बोधनं यद्यपि प्रचलति स्म, किन्तु तत्रत्यः आहारः तु कन्दमूलफलानि एव।

एवम् एव एकं वर्षम् अतीतम्। श्रद्धानन्दः पूर्वं बोधितान् विषयान् पुनः बोधयितुम् उद्युक्तः अभवत्।

प्रद्युम्नः श्रद्धानन्दस्य शिष्यः। सः एतस्मिन् गुरुकुले एकं वर्षं यावत् अध्ययनं कृत्वा राजास्थाने उद्योगं सम्पादितवान् आसीत्। तस्य सामर्थ्यातिशयं दृष्ट्वा राजा निर्णीतवान् आसीत् यत् प्रद्युम्नः सत्करणीयः इति। सत्कारसभादिनं निश्चितम् आसीत्। प्रद्युम्नः श्रद्धानन्दं प्रति वार्तां प्रेषितवान् आसीत् यत् शिष्यैः सह आगत्य अहम् आशीर्वादेन अनुग्रहणीयः इति। एतत् आह्वानम् अङ्गीकुर्वन् श्रद्धानन्दः राजधानीं गतवान्।

सत्कारसभायां राजा प्रद्युम्नाय दशसहस्रं रूप्यकाणि उपायनरूपेण अर्पितवान्।

सम्मानसमये प्रद्युम्नः गुरुं श्रद्धानन्दं वेदिकायाः उपरि आहूय साष्टाङ्गं नमस्कृत्य - ''मया अद्य एतादृशी स्थितिः प्राप्ता यत् तत्र कारणं मम गुरोः बोधनम् एव'' इति सभ्यान् उद्दिश्य उक्तवान्।

''एषः शिष्यत्वम् इच्छन् यदा मम आश्रमम् आगतवान् आसीत् तदा एव अहम् उक्तवान् आसं यत् एषः महापुरुषत्वं प्राप्य कीर्तिमान् भविष्यति इति। मम वचनं सत्यम् एव जातम् इति तु मम विशेषसन्तोषः'' इति उक्तवान् श्रद्धानन्दः।

एतत् श्रुत्वा सन्तोषम् अनुभवन् जगन्नाथः स्वपार्श्वे स्थितं मेधातिथिम्

उक्तवान् – "गुरुः माम् अपि एवम् एव उक्तवान् अस्ति । अतः अचिरात् एव अहम् अपि प्रसिद्धिं प्राप्नुयाम्" इति ।

तदा मेधातिथिः गुरौ अनादरं प्रकटयन् उक्तवान् – "एवं कथनम् अस्माकं गुरोः अभ्यासः । माम् अपि एवम् एव उक्तवान् अस्ति सः । किन्तु पश्यतु, षट् वर्षाणि मया अत्र विद्याभ्यासः कृतः । मम विद्याभ्यासः कदा समाप्यते इत्येव न ज्ञायते । प्रद्युम्नः तु बुद्धिमान् । वर्ष यावत् अध्ययनस्य अनन्तरं सः ज्ञातवान् यत् इतः परम् एतस्मात् गुरोः सकाशात् प्राप्तव्यं किमपि नास्ति इति । अतः गुरुकुलात् निर्गतवान् सः । मम तु तथा कर्तुं धैर्यं नास्ति" इति ।

एतानि वचनानि जगन्नाथस्य मनः चिन्ताक्रान्तम् अकुर्वन् । तस्यां रात्रौ चिन्तामग्नेन तेन निद्रा एव न प्राप्ता ।

अनन्तरदिने राजा श्रद्धानन्दसमीपम् आगत्य – "गुरुवर्य ! मम आस्थाने कोषाधिकारि-सहायकोद्योगस्य स्थानं पूरणीयम् । अतः, तदर्थम् अर्हः भवतः शिष्येषु कोऽपि यदि स्यात् तर्हि सूचयतु" इति उक्तवान् ।

श्रद्धानन्दः प्रश्नार्थकदृष्ट्या शिष्यान् दृष्टवान् । तदा जगन्नाथः उत्थाय – "मम विद्याभ्यासः एतावता समाप्तः अस्ति इति अहं भावयामि । यदि भवतः अनुज्ञा स्यात् तर्हि अहम् एतदर्थं गच्छेयम्" इति उक्तवान् ।

तदा श्रद्धानन्दः मन्दहासपूर्वकं – "साधु वत्स ! अल्पे एव काले भवतः अपि सम्माननं भवितुम् अर्हति । सदा सद्गुणानां रक्षणे प्रयत्नः



भवतु'' इति उक्त्वा आशीर्वादं कृतवान्। जगन्नाथः गुरुं साष्टाङ्गं नमस्कृतवान्।

ततः जगन्नाथः यदा एकान्ते आसीत् तदा मेधातिथिः खेदेन - ''दृष्टा खलु भवता गुरोः पक्षपातबुद्धिः ? भवता द्विसहस्रं रूप्याकाणि दत्तानि। अतः सः भवन्तं वर्षाभ्यन्तरे राजोद्योगिनं कृतवान्। किन्तु मया तु अधिकं धनं न दत्तम्। अतः सः मादृशान् आश्रमकार्येषु योजयन् अस्माकम् आयुः व्यर्थीकरोति'' इति उक्तवान्।

तदा जगन्नाथः उक्तवान् - ''मित्र! अन्यथा चिन्तितं भवता। गुरुः सर्वान् अपि समभावनया एव पाठयति। छात्राः वयं स्वयोग्यतानुगुणं तत् अवगच्छामः। विविधान् विषयान् वयं यावत् वा जानीयाम नाम, तथापि प्रत्यक्षानुभवं विना न किमपि प्रयोजनम्। पर्वतारोहणं करणीयं चेत्, युद्धे भागः ग्रहीतव्यः चेत्, तरणं करणीयं चेत् च प्रत्यक्षं कार्ये प्रवर्तनीयम्। प्रद्युम्नप्रभृतयः तु एतत् अवगच्छन्तः अत्र ज्ञातम् अंशं व्यवहारे योजयन्तः अनुभवं सम्पादयन्तः प्रगतिं साधितवन्तः। एकं वर्षं यावत् बोधनीयान् अंशान् सर्वान् ज्ञापयित्वा गुरुः पुनरपि तान् एव विषयान् द्वितीये वर्षे अपि बोधयितुम् उद्युक्तः भवति। एतस्य तात्पर्यं यत् अध्ययनकालः समाप्तः इति भवन्तः जानन्तु इति। महात्मानः सर्वान् अपि विषयान् शब्दैः न प्रकाशयन्ति। अपि तु व्यवहारेण अभिव्यञ्जयन्ति। बुद्धिमत्तया अस्माभिः एतत् अवगन्तव्यम्'' इति।

तदा मेधातिथिः स्वस्य अज्ञानस्य विषये पश्चात्तापम् अनुभवन् - ''मित्र! भवता मयि विवेकः जागरितः। दोषयुक्तः सन् अहं आचार्ये दोषं पश्यन् आसम्। इदानीं विवेकः प्राप्तः। इतः परम् अपि कानिचन दिनानि अत्रैव स्थित्वा गुरुसेवां कृत्वा अनुभव-प्राप्त्यर्थं बाह्यं प्रपञ्चं प्रति आगमिष्यामि'' इति उक्तवान्।

जगन्नाथः राजस्थानोद्योगभारं सम्यक् एव निर्वहन् सर्वेषां प्रीतिपात्रं जातः। विशालाक्षीं परिणीय सः स्वसामर्थ्येन प्रगतिं साधयन् गुरोः कीर्तिं वर्धितवान्।





# कीर्तिसिंहकथा - १

प्राचीने काले कोसलदेशं सुषेणः नाम राजा पालयति स्म । तस्य जयसेनः नाम आत्मीयं मित्रम् आसीत् । जयसेनः सुषेणस्य न केवलम् आत्मीयं मित्रम्, अपि तु आन्तरङ्गिकः मार्गदर्शकः अपि । चतुरङ्गक्रीडायां नितराम् आसक्तः राजा मित्रेण जयसेनेन सह सदा चतुरङ्गक्रीडा क्रीडति स्म ।

कदाचित् चतुरङ्गक्रीडायां राजानं जितवान् जयसेनः हसन् उक्तवान् - ''एतस्यां क्रीडायां भवन्तं जितवता मया यावान् आनन्दः प्राप्यते ततोऽपि शतगुणितः आनन्दः पुत्र्या पराजीयमानेन प्राप्यते । एतत् तु नितराम् आश्चर्यकरम् !'' इति ।

जयसेनस्य एकमात्रपुत्री शक्तिसेना । सा रूपवती, गुणवती, बुद्धिमती चापि आसीत् । एतत् श्रुतवान् अपि राजा किमपि अजानन् इव आश्चर्येण पृष्टवान् - ''किं भवतः पुत्री चतुरङ्गक्रीडायां तावत् नैपुण्यं प्राप्तवती अस्ति ?'' इति ।

''अथ किम् ? यदि अपेक्ष्यते तर्हि भवान् स्वयं परीक्षां कर्तुम् अर्हति'' इति उक्तवान् जयसेनः ।

''अस्तु तर्हि । श्वः रात्रौ भवतः गृहम् आगमिष्यामि । भवतः आतिथ्यं प्राप्य भवतः पुत्र्याः चतुरङ्गक्रीडानैपुण्यस्य परीक्षाम् अपि करिष्यामि'' इति हसन् उक्तवान् महाराजः ।

''अनुगृहीतोऽस्मि'' इति उक्तवान् जयसेनः । स्ववचनस्य अनुगुणं राजा



जयसेनस्य गृहं गत्वा शक्तिसेनया सह चतुरङ्गक्रीडां क्रीडितवान् ।

महता चातुर्येण अश्वादीनि क्रीडासाधनानि चालयन्ती शक्तिसेना अल्पेन एव प्रयासेन महाराजं त्रिवारम् अपि पराजितं कृतवती ।

शक्तिसेनायाः बुद्धिमत्तां क्रीडानैपुण्यं च दृष्ट्वा राजा नितराम् आश्चर्यचकितः । नयनमनोहरं तस्याः अपूर्वं सौन्दर्यं दृष्ट्वा तु सः नितराम् आकृष्टः जातः ।

अनन्तरं राजा जयसेनस्य आतिथ्यं स्वीकुर्वन् - ''जयसेन ! बुद्धिमतीं रूपवतीं च शक्तिसेनां पुत्रीत्वेन प्राप्तवन्तं भवन्तम् अभिनन्दामि । किन्तु मम तु आशयः यत् यदि सा पुत्रः अभविष्यत् तर्हि वरम् अभविष्यत्'' इति हसन् उक्तवान् ।

तदा जयसेनः उक्तवान् - ''भवतः आशयं न अङ्गीकरोमि अहम् । मम पुत्री शस्त्रे शास्त्रे च अद्वितीया अस्ति । कोऽपि पुरुषः एतस्याः तुल्यतां प्राप्तुं न अर्हति । वीराधिवीराः इति ये लोके ख्याताः तान् अपि पराक्रमेण अतिशेते मम पुत्री । अतः सा स्त्री चेदपि अभिमानास्पदम् एव अस्ति'' इति ।

एतत् श्रुत्वा किञ्चिदिव असन्तुष्टः राजा - ''एवं तर्हि मम पुत्रस्य कीर्तिसिंहस्य अपेक्षया अपि भवतः पुत्री शक्तिसेना एव श्रेष्ठा इति खलु भवतः अभिप्रायः ?'' इति पृष्टवान् ।

स्वस्य कथनम् एवं राज्ञः असन्तोषाय भवेत् इति, कष्टकरस्य प्रश्नस्य कारणं भवेत् इति वा न ऊहितम् आसीत् जयसेनेन । अतः 'किम् उत्तरं वक्तव्यम् ?' इति चिन्तयन् क्षणकालं मौनं स्थितवान् सः । तदा राजा पुनः उक्तवान् - ''मित्र ! अलं चिन्तया । भवतः पुत्र्याः श्रेष्ठत्वम् अङ्गीकर्तुं सिद्धः अस्मि अहम् । किन्तु अङ्गीकारः भवद्वचनश्रवणमात्रेण न, अपि तु परीक्षणस्य अनन्तरं भवेत् । तदर्थम् एकां परीक्षाम् आयोजयिष्यामि अहम् । तस्यां सा यदि जयं प्राप्नुयात् तर्हि ताम् अहं मम स्नुषां करिष्यामि । यदि सा अनुत्तीर्णा भवेत् तर्हि तां पुत्रीत्वेन भावयन् योग्यं वरम् अन्विष्य तस्याः विवाहं निर्वर्तयिष्यामि'' इति ।

अनन्यगतिकः जयसेनः प्रतिवचनं किमपि वक्तुम् अशक्नुवन् अङ्गीकारपूर्वकं शिरः चालितवान् । तदा राजा उक्तवान् -

''मित्र ! मम परीक्षायाः स्वरूपं शृणोतु तावत् । मम पुत्रः युवराजः कीर्तिसिंहः अस्मद्देशस्य उत्तरस्यां दिशि पर्वतप्रदेशे स्थिते कृष्णचन्द्रवर्यस्य गुरुकुले विद्याभ्यासं कुर्वन् अस्ति । तस्य विद्याभ्यासः सद्यः एव समाप्तः । सः आगामिन्यां कृष्णप्रथमायाम् एकाकितया प्रस्थाय राजधानीं प्रत्यागमिष्यति । भवतः पुत्री मार्गे तेन मिलित्वा तं पूर्वस्यां दिशि स्थितम् अरण्यं नयेत् । तस्मिन् अरण्ये प्राचीनं शक्तिमन्दिरम् अस्ति इति भवान् जानीयात् एव । तस्मिन् देवालये मम पुत्रं त्रीणि दिनानि यावत् बन्धने स्थापयेत् भवतः पुत्री । यदि सा एतत् कर्तुं समर्था भवेत् तर्हि ताम् अहं स्नुषां कुर्याम् । किन्तु अत्र अयं नियमः यत् एतत्सर्वं तया एकाकिन्या करणीयम् । अन्यसाहाय्यं कदापि न स्वीकरणीयम् । युवराजः अन्यत्र कुत्रापि न नेतव्यः । अन्यत्र बन्धने न स्थापनीयः । शक्यते वा एतत् ?'' इति ।

राज्ञा उक्तं परीक्षास्वरूपं श्रुतवतः जयसेनस्य मुखं कान्तिहीनं जातम् । सः दिग्भ्रान्तः आसीत् ।

क्षणद्वयस्य मौनस्य अनन्तरं जयसेनः आसनात् उत्थाय राज्ञः हस्तौ दृढं गृहीत्वा - ''महाराज ! पुत्रीविषयकेण अभिमानेन मया यत् उक्तं तदर्थं क्षमां प्रार्थये । करौ योजयित्वा भवन्तं निवेदयामि यत् मम पुत्रीम् एतादृश्यां कठिनपरीक्षायां न योजयतु इति । कृपया मयि कृपां प्रदर्शयतु'' इति प्रार्थितवान् ।

तदा महाराजः गम्भीरस्वरेण - ''एवं वा



स्थितिः ? भवतः पुत्रीम् अत्र आनाययतु तावत्'' इति उक्तवान् ।

जयसेनः पुत्रीम् आनायितवान् । महाराजः तां सर्वं स्वयं निवेद्य - ''वत्से ! भवतः पितुः पुत्र्यां भवत्यां विशेष-व्यामोहः । सः भवत्याः अल्पं कष्टम् अपि सोढुं न सिद्धः । अतः भवतीं पृच्छामि - किं भवती एतां परीक्षां सम्मुखीकर्तुं सिद्धा ?'' इति पृष्टवान् ।

शक्तिसेना विनयेन - ''अहं सिद्धा अस्मि'' इति उक्तवती । पुत्र्याः अङ्गीकारवचनं श्रुत्वा जयसेनः दिग्भ्रान्तः । महाराजः तु मन्दहासपूर्वकं जयसेनसमीपम् आगत्य तस्य स्कन्धं मृदु प्रहृत्य प्रासादं प्रति गतवान् ।



जातः अस्ति सः । एवं स्थिते तस्य वचनम्, अन्यत्र नयनम् इत्यादिकं किं शक्येत ? तत्रापि एकाकिन्या करणीयम् एतत् ! अविचिन्त्य अङ्गीकारं सूचयन्त्या भवत्या महती मूर्खता अनुष्ठिता" इति उक्तवान्।

पितुः वचनं श्रुत्वा अपि धैर्यच्युतिम् अप्राप्तवती शक्तिसेना - "तात ! एतत्सर्वं महाराजः जानाति एव खलु ? जानता अपि तेन एषा परीक्षा निर्दिष्टा । अतः अहम् एव भवन्तं पृच्छामि - महाराजः जानन् अपि एतादृशीं कठिनपरीक्षां किमर्थं निर्दिष्टवान् ?" इति पृष्टवती।

जयसेनः पुनरपि उद्वेगेन उक्तवान् - "भवती शक्तिमती इति अभिमानेन गर्वेण च अहम् आसं यत् तत् निवारयितुम् एव महाराजस्य एतत् तन्त्रम्" इति।

तदा शक्तिसेना हसन्ती उक्तवती - "तात! अतिप्रीतिः अधिकव्यामोहः वा पापाशङ्कां वर्धयति इति प्राज्ञाः वदन्ति । भवतः अपि तादृशी एव स्थितिः । ज्येष्ठाः कनिष्ठानां सामर्थ्यं ख्यापयितुं सर्वदा प्रयत्नं कुर्वन्तः भवन्ति । परीक्षाद्वारा एव सामर्थ्यं प्रकाशितं प्रमाणितं च भवति । असाध्ये कार्ये योजनम् अपि परीक्षाद्वारा शक्यते एव । तादृशः प्रयत्नः परीक्षकस्य अपमानाय अपकीर्त्यै च भवति । किन्तु राजा तादृशः अधमः तु सर्वथा न । अस्माकं हितेच्छुः सः । अतः केनचित् विशिष्टेन उद्देशेन एव राज्ञा एषा परीक्षा सूचिता स्यात् । राज्ञः आन्तर्यं न ज्ञायते इत्यतः एषः उद्वेगः भवतः । मम तु एवं भाति

महाराजस्य निर्गमनस्य अनन्तरं शक्तिसेना पितुः समीपम् आगत्य - "तात ! एतद्विषये तावत् चिन्तनीयं किम् अस्ति ? अस्थाने भीतिः किमर्थं भवतः ?" इति पृष्टवती।

पुत्र्याः वचनं श्रुत्वा किञ्चिदिव क्रुद्धः जयसेनः उद्वेगेन - "वत्से ! इतः परं चिन्तनीयं किम् अस्ति इति ? हूँ, किं वा प्रयोजनं चिन्तनेन ? भवत्या तु अङ्गीकारः प्रदर्शितः एव । तथापि पिता सन् अहं कर्तव्यबुद्ध्या किञ्चित् वदामि । कीर्तिसिंहः कीदृशः इति अहं सम्यक् जानामि । तत्रापि महागुरोः कृष्णचन्द्रस्य प्रीतिपात्रं शिष्यः आसीत् सः । अतः राजनीतौ, लौकिकव्यवहारे, युद्धविद्यायां च अद्वितीयः

यत् अत्र उद्वेगः प्राप्तव्यः नास्ति इति । धैर्यस्य अवलम्बनम् एव इदानीम् उचितः मार्गः इति'' इति ।

पुत्र्याः वचनम् आश्चर्येण शृण्वन् जयसेनः – "वत्से ! महाराजः अधमः न इति, अस्माकं हितेच्छुः एव सः इति च अहं जानामि एव । महाराजः अस्मदीयः एव'' इति स्वगतम् इव वदन् आसनात् उत्थाय चिन्तनं कुर्वन् इतस्ततः सञ्चारं कृतवान् ।

किञ्चित्कालानन्तरं जयसेनः शिरः उन्नीय पुत्रीं प्रीत्या पश्यन् – "वत्से ! भवत्याः कथनं युक्तम् एव अस्ति'' इति उक्त्वा दीर्घं निश्वस्य पुनः उक्तवान् – "मया यथा चिन्तितं तथैव राज्ञः चिन्तनम् अपि स्यात् इति भावयामि अहम् । अतः मया एतद्विषये किञ्चित् वक्तव्यम् अस्ति । श्रद्धया शृणोतु तावत्'' इति ।

ततः सः कथनम् अनुवर्तितवान् –

"इदनीम् अस्माकं राज्ञः सुषेणस्य च यः स्नेहः अस्ति सः प्राचीनकालात् एव अनुवृत्तः अस्ति । अस्माकं पूर्वजाः कोसलराजानाम् आप्तमित्राणि आन्तरङ्गिकमार्गदर्शकाः च सन्तः जीवितवन्तः । मम पितामहस्य प्रपितामहः अपि राज्ञः सहायकः आसीत् । तस्य नाम अपि जयसेनः इत्येव । सः प्रज्ञावान् विविधविद्यापारङ्गतः च आसीत् । मन्त्रतन्त्रविद्यायां सः करतलामलकतां प्राप्तवान् आसीत् । तम् अतिशेतुं समर्थः अन्यः मन्त्रतन्त्रज्ञः तत्काले कोऽपि न आसीत् ।

तदा महाराजः विचित्रवर्मा राज्यं पालयति स्म । मन्त्रशास्त्रे तस्य





सुख-दुःखादिकं जानीतः स्म । चोरान् दुष्टान् च गृहीत्वा तौ दण्डयतः स्म । विपद्ग्रस्तानां साहाय्यम् आचरतः स्म ।

राज्ञः प्रजापालनविचक्षणतायाः धर्मप्रियतायाः च कारणतः कोसलदेशः समृद्धिं गतः आसीत् । प्रजाः च सुखेन सन्तोषेण च आसन् । दुष्टाः चोराः च राज्ञः नामस्मरणात् एव भीताः भवन्ति स्म ।

कदाचित् जन्मदिनं निमित्तीकृत्य जयसेनः महाराजाय एकं मौक्तिकहारम् उपायनीकृतवान् । सः हारः न हि सामान्यः । मन्त्रशक्तिभिः युक्तानि मौक्तिकानि तत्र योजितानि आसन् । नवरत्नखचितम् एकं पदकम् अपि योजितम् आसीत् तस्मिन् ।

सामान्यः इव दृश्यमाने तस्मिन् हारे त्रिविधाः शक्तयः निहिताः आसन् । यः तं हारं धरति सः अपेक्षायां सत्याम् अदृश्यतां प्राप्य सञ्चारं कर्तुं शक्नोति स्म इति तु हारस्य प्रथमं वैशिष्ट्यम् । पुरतः स्थितः जनः सत्यं वदति, उत असत्यम् इति ज्ञातुं शक्यते स्म इति तु हारस्य अपरं वैशिष्ट्यम् । तृतीयं वैशिष्ट्यं नाम यः तं हारं धरति सः भूमिस्थं निधिं दर्पणे इव स्फुटं द्रष्टुं शक्नोति स्म । एवं त्रिविधशक्तिभिः युक्तं तं हारं जयसेनः महाराजस्य निमित्तम् एव विशेषप्रयत्नेन सज्जीकृतवान् आसीत् ।

जयसेनेन उपायनीकृतस्य हारस्य वैशिष्ट्यं ज्ञात्वा महाराजः विचित्रवर्मा नितरां सन्तुष्टः । जयसेनस्य प्रीत्यतिशयं

विशेषाभिरुचिः आसीत् । तस्मिन् शास्त्रे सामान्यपरिणतिः अपि आसीत् तस्य । मत्पितामह-प्रपितामहस्य जयसेनस्य मन्त्रशास्त्रनैपुण्यं ज्ञात्वा राजा तदीयं स्नेहं सम्पाद्य तम् आन्तरङ्गिक-मार्गदर्शकस्थाने नियोजितवान् आसीत् । सकलशास्त्र-पारङ्गतस्य धर्ममूर्तेः स्नेहस्वरूपस्य महाराजस्य विचित्रवर्मणः स्नेहः जयसेनस्य अपि प्रियः आसीत् । अल्पे एव काले तौ परमात्मीयौ जातौ । तयोः स्नेहः एतावत् प्रवृद्धः यत् तौ परस्परयोः निमित्तं प्राणान् अपि समर्पयितुं सिद्धौ आस्ताम् ।

जयसेनेन ज्ञातायाः मन्त्रविद्यायाः साहाय्येन राजा जयसेनश्चापि अदृश्यतां प्राप्य राज्ये सञ्चरन्तौ प्रजानां

स्मरतः तस्य हृदयं कृतज्ञताभावेन पूर्णम् अभवत् ।

कानिचन दिनानि अतीतानि । जयसेनेन उपायनीकृतं हारं धृत्वा राजा विचित्रवर्मा मृगयार्थं कोसलस्य पूर्वस्यां दिशि स्थितम् अरण्यम् उद्दिश्य गतवान् । अनारोग्यकारणतः जयसेनः महाराजेन सह गन्तुं न शक्तवान् आसीत् ।

सपरिवारं गतः राजा आदिनं मृगयाविहारं कृतवान् । रात्रौ अरण्ये एव शिबिरं निर्मितम् । तत्र महाराजः अन्ये च विश्रान्तिसुखम् अनुभूतवन्तः ।

रक्षकभटेभ्यः ऋते अन्ये सर्वे निद्रायां लीनाः आसन् । महाराजेन तु निद्रा न प्राप्ता एव । मध्यरात्रसमये कश्चन अव्यक्तः भावः तस्मिन् उद्भूतः । मानसिक्या अशान्त्या पीड्यमानः सः कयाचित् अव्यक्तया शक्त्या आकृष्यमाणः इव उत्थाय गम्यं स्थानं किमपि अजानन् एव ततः प्रस्थितवान् । महाराजस्य विचित्रव्यवहारस्य कारणम् अजानन्तः रक्षकभटाः आश्चर्यम् अनुभवन्तः महाराजम् अनुसृतवन्तः ।

अन्ते कस्मिंश्चित् स्थले तिष्ठन् राजा भटान् आज्ञापितवान् यत् अत्र खननं कुर्वन्तु इति । भटाः दीपान् प्रज्वाल्य खनने उद्युक्ताः अभवन् । रात्रौ आरब्धं खननम् अनन्तरदिनस्य मध्याह्नं यावत् अनुवृत्तम् ।

मध्याह्नसमये उन्नतः, कृष्णवर्णीयः, वज्रमयेन नासाभरणेन युक्तः कश्चन शक्तिविग्रहः तत्र प्राप्तः । देव्याः विग्रहं दृष्टवतः महाराजस्य महान् आनन्दः जातः । सः भटान् आज्ञापितवान् यत् एतं विग्रहं राजधानीम् आनयन्तु इति ।

महाराजेन सह प्रह्लादः नाम मन्त्री आसीत् । सः राज्ञः आशयं निराकुर्वन् उक्तवान् - "प्रभो ! आगमशास्त्रज्ञाः यदि अङ्गीकुर्युः तर्हि एव राजधानीं प्रति विग्रहस्य नयनं वरम्" इति ।

राजा विचित्रवर्मा मन्त्रिणः सूचनां निराकर्तुम् अशक्नुवन् कांश्चन भटान् विग्रहरक्षणकार्ये नियोज्य राजधानीं प्रतिगतवान् । (अनुवर्तते)





# विवेकी कुमुदः

यत् कार्यम् आरब्धं तत् समापनीयम् एव इति निश्चित्य त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! किमपि महत् कार्यं साधयितुम् उद्युक्तः भवान् मध्यरात्रसमये भीकरे अस्मिन् श्मशाने महत् कष्टम् अनुभवन् अस्ति इति भाति। किन्तु स्वकार्यविषये जागरूकः भवेत् भवान् । यतः महान्तः अनुभविनः विवेकशालिनः बुद्धिमन्तः चापि फलप्राप्तिसमये अन्यथा व्यवहरन्तः ततः वञ्चिताः भवन्ति। पूर्वं कुमुदनामकः कश्चित् मेधावी एवमेव व्यवहृतवान्। कुमुदस्य कथां श्रावयामि। श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं महेन्द्रनामकः राजा त्रिपुरदेशं पालयन् आसीत् । तस्य राज्यपालनसमये राजोद्योगिनः अनीतिमन्तः आसन् ।

## वेतालकथा



प्रजाः महाराजाय यत् करं समर्पयन्ति, तत्र अधिकांशं लाभम् अनीतिमन्तः राजोद्योगिनः एव प्राप्नुवन्ति स्म । तेन कोशागारं रिक्तं भवति स्म । यथा यथा कोशागारं रिक्तं भवति स्म तथा तथा राजा करवर्धनं करोति स्म ।

त्रिपुरदेशस्थे चन्द्रावतीनामके नगरे कुमुदनामकः कश्चित् मेधावी आसीत् । सः स्वबुद्धिशक्त्या महतीम् अपि समस्यां सुलभतया परिहरति स्म । अतः जनाः अधिकतया समस्यापरिहारार्थं तस्य समीपं गच्छन्ति स्म । कदाचित् देशे क्षामः आगतः । तदा कुमुदस्य दर्शनार्थम् आगन्तॄणां जनानां संख्या अपि न्यूना जाता । क्षामकारणतः प्रजानाम् आयः न आसीत् । करभारः तु दिने दिने वर्धमानः आसीत् । एवं स्थिते कुमुदः महाराजस्य दर्शनार्थं राजधानीं गतवान् ।

यदि महाराजः द्रष्टव्यः, तर्हि प्रथमं समीरनामकः राजोद्योगी द्रष्टव्यः आसीत् । समीरगृहस्य द्वारे यौ रक्षकभटौ तिष्ठतः ताभ्याम् उत्कोचं दत्त्वा एव समीरस्य दर्शनं करणीयम् आसीत् ।

कुमुदः रक्षकभटयोः कृते उत्कोचं दत्त्वा समीरस्य दर्शनार्थं गतवान् । कुमुदं दृष्ट्वा समीरः पृष्टवान् - "महाराजस्य समीपे किं कार्यं भवतः ?" इति ।

तदा कुमुदः उक्तवान् - "प्रजाः यदा कष्टम् अनुभवन्ति तदा महाराजेन प्रजानां साहाय्यं करणीयम् । किन्तु अस्माकं महाराजः तु प्रजानां हितचिन्तनं सर्वथा विस्मृत्य करं वर्धयन् अस्ति । एषः महान् अपराधः इति महाराजः मया बोधनीयः । कोशागारं रिक्तं चेत् अपि राज्यपालनं कथं करणीयम् इति उपायः अपि मया बोधनीयः" इति ।

"सः उपायः कः इति मां वदतु भवान् । अनन्तरम् अहं महाराजं वदिष्यामि" इति उक्तवान् समीरः ।

तदा कुमुदः उक्तवान् - "तम् उपायं भवन्तं न वदामि अहम् । महाराजम् एव वदामि" इति ।

तदा समीरः - "तर्हि भवान् मह्यं शतं रूप्यकाणि ददातु । अहं भवन्तं मन्त्रिसमीपं प्रेषयामि । मन्त्री भवन्तं मुख्यमन्त्रिसमीपं प्रेषयति । सर्वेभ्यः अपि भवान् यथाशक्ति

धनं ददाति चेत् महाराजस्य दर्शनं भविष्यति'' इति उक्तवान्।

समीरस्य वचनं श्रुत्वा महाराजस्य दर्शनं कथमपि न भविष्यति इति विचिन्त्य कुमुदः निराशया नगरतः प्रस्थितवान्, अरण्यमार्गम् आश्रितवान् च। अरण्ये कश्चित् मुनिः मिलितवान्। सः मुनिः समीरं दृष्ट्वा उक्तवान् - ''युक्ते समये भवान् आगतवान्। अहम् इदानीं हिमालयं प्रति प्रस्थितः अस्मि। मम समीपे एकम् अपूर्वम् अङ्गुलीयकम् अस्ति। तत् अङ्गुलीयकं कस्मै ददामि इति चिन्तयन् आसम्'' इति।

तत् अङ्गुलीयकं श्वेतशिलया युक्तम् आसीत्। अनीतिमान् कश्चित् तत् अङ्गुलीयकं पश्यति चेत् तदङ्गुलीयकस्य श्वेतशिला नीलवर्णं प्राप्नोति। तदङ्गुलीयकं धृत्वा यः पञ्चाक्षरीमन्त्रं त्रिवारं जपति तेन इष्टः आशयः सिध्यति। एतत् तस्य अङ्गुलीयकस्य वैशिष्ट्यम् आसीत्।

मुनिः कुमुदाय तत् अपूर्वम् अङ्गुलीयकं दत्तवान्। कुमुदः तत् अङ्गुलीयकं धृत्वा मुनिं साष्टाङ्गं प्रणम्य ततः प्रस्थितवान्।

कुमुदः ततः चन्द्रावतीनगरं गत्वा स्वबन्धुजनान् मित्राणि च उक्तवान् - ''इदानीं वयं सर्वे राजधानीं गच्छाम। तत्र सुखेन जीवनं यापयाम च'' इति। ततः सर्वे राजधानीं प्रति प्रस्थितवन्तः।

राजधान्यां कश्चित् धनिकः अङ्गुलीयकस्य प्रभावतः कुमुदाय स्वगृहे स्थातुम् अनुमतिं दत्तवान्।

राजधानी अतीव विशाला आसीत्। कुमुदः तत्र सामान्यजनानां मध्ये एव अटन्





के अनीतिपराः इति ज्ञातवान् । अनीतिपराः सहस्राधिकाः जनाः सन्ति इति ज्ञात्वा सः क्षणकालं खिन्नः ।

कुमुदः प्रथमं नगरस्य प्रसिद्धवणिजः समीपं गतवान् । अनुक्षणं कुमुदस्य अङ्गुलीयकं नीलवर्णं प्राप्नोत् । तेन सः वणिक् अनीतिमान् इति ज्ञात्वा कुमुदः - "भवान् महान् दुष्टः । एतस्य परिहारार्थं भवता प्रतिमासं मह्यं दशसहस्रं रूप्यकाणि दातव्यानि । नो चेत् इदानीम् एव भवतः हस्तौ पादौ च शक्तिहीनौ भवतः" इति उक्तवान् ।

एतत् श्रुत्वा अपि वणिक् कुमुदाय धनं न दत्तवान् । तदा कुमुदः मनसि एव त्रिवारं पञ्चाक्षरीमन्त्रं जपितवान् । अपरक्षणे एव वणिजः हस्तौ पादौ च शक्तिहीनौ जातौ । एतस्मात् भीतः वणिक् कुमुदाय धनं दत्तवान् । एवंप्रकारेण कुमुदः बहूनि स्थानानि गत्वा ये अनीतिपराः सन्ति, तेषु भयम् उत्पाद्य ततः धनं स्वीकृतवान् ।

एवं धनसम्पादनं कृत्वा कुमुदः सुन्दरे विशाले भवने वासं कर्तुम् आरब्धवान् । दरिद्रेभ्यः धनधान्यादिकं दानरूपेण ददामि इति प्रकटनं कृतवान् सः । एतत्कारणतः प्रतिदिनं तस्य गृहं प्रति बहवः जनाः साहाय्यं प्राप्तुम् आगच्छन्ति स्म ।

सामान्यजनाः कुमुदस्य प्रशंसां कुर्वन्ति स्म । एतेन कुमुदः प्रसिद्धिं प्राप्तवान् । किन्तु अनीतिपराः कुमुदं द्विषन्ति स्म । आरम्भकाले ते अनीतिपराः कुमुदात् भीताः चेदपि क्रमशः धैर्यं प्राप्य महाराजसमीपे कुमुदविषये आरोपं कृतवन्तः । महाराजः मुख्यमन्त्रिणम् एतं विषयम् उक्तवान् । मुख्यमन्त्री मन्त्रिणम् उक्तवान् । मन्त्री समीरम् उक्तवान् ।

एतत् सर्वं ज्ञात्वा समीरः कदाचित् कैश्चित् भटैः सह कुमुदस्य गृहं गत्वा आरोपविषये पृष्टवान् ।

तदा कुमुदः - "प्रथमं भवतः पापविषये वदतु । भवान् किं किम् अकार्यं कृतवान् ?" इति पृष्टवान् ।

एतत् श्रुत्वा कुपितः समीरः - "माम् एव प्रतिप्रश्नं करोति वा ? एवं तर्हि भवान् कारागारे स्थापनीयः । अतः एव मया भटाः आनीताः" इति उक्तवान् ।

"भटानाम् आनयनेन उपकारः कृतः भवता । इदानीम् एव भवान् भटानां द्वारा पञ्चसहस्रं रूप्यकाणि आनाययतु । प्रतिमासं मह्यं पञ्चसहस्रं रूप्यकाणि ददातु च । तेन भवतः पापं परिहृतं भविष्यति, पुण्यं च सम्पादितं भविष्यति" इति वदन् कुमुदः त्रिवारं पञ्चाक्षरीमन्त्रं जपितवान् ।

अपरक्षणे एव समीरस्य हस्तौ पादौ च शक्तिहीनौ जातौ । निश्चलः सः तत्रैव पतितवान् । तदा भटाः गृहं गत्वा पञ्चसहस्रं रूप्यकाणि आनीय कुमुदाय दत्तवन्तः । तेन समीरः पूर्वस्थितिं प्राप्तवान् ।

अनन्तरम् अन्ये मन्त्रिणः अपि कुमुदतः आत्मानं रक्षितुम् इच्छन्तः पापपरिहाराय प्रतिमासं कुमुदाय धनस्य दानम् अङ्गीकृतवन्तः ।

एतं विषयं महाराजः ज्ञातवान् । कुमुदः असामान्यः पुरुषः इति ज्ञात्वा महाराजः स्वयम् एव कुमुदस्य दर्शनार्थं प्रस्थितः ।

आगतं महाराजं दृष्ट्वा कुमुदः महाराजं नमस्कृतवान् । कुमुदस्य विनयव्यवहारेण चकितः राजा – "भवतः विषये बहुधा श्रुतवान् अहम् । परन्तु मम विषये भवतः गौरवभावना अस्ति इति न ज्ञातम् आसीत् मया" इति उक्तवान् ।

तदा कुमुदः उक्तवान् – "यद्यपि अहं भवतः अपेक्षया अपि श्रेष्ठः, तथापि अनीतिमान् नीतिमन्तं नमस्कुर्यात् एव खलु ?" इति ।

"भवतः वचनात् ज्ञायते यत् भवान्



अनीतिपरः इति । एतत् जानन् अपि भवान् किमर्थम् अनीतिम् आचरति ?" इति कुमुदं पृष्टवान् महाराजः ।

तदा कुमुदः उक्तवान् – "अहं भवतः अपेक्षया अपि श्रेष्ठः इति उक्तं मया । तद्विषये भवान् आक्षेपं न कृतवान् । एवं तर्हि भवतः अपेक्षया मम श्रेष्ठत्वं भवता अङ्गीकृतं किल !" इति ।

कुमुदस्य वचनं श्रुत्वा महाराजः उक्तवान् – "अहं तु सामान्यः राजा । भवान् मन्त्रतन्त्रादिकं जानाति इति कारणतः भवान् एव मम अपेक्षया श्रेष्ठः इति अङ्गीकरणम् अनिवार्यम्" इति ।

तदा कुमुदः मन्दहासपूर्वकम् उक्तवान् – "भवान् राजवंशे जन्म प्राप्तवान् । अतः एव



भवान् महाराजपदवीं प्राप्तवान्। भवान् अपि मन्त्रशक्तीः जानाति । तत्र कारणं भवतः सिंहासनम् । अतः एव प्रजाः भवतः अपेक्षानुगुणं करं यच्छन्ति । अतः आवयोः मध्ये न कोऽपि भेदः अस्ति। आवां समानौ। किन्तु भवान् प्रजाभ्यः अत्यधिकं करं स्वीकुर्वन् अस्ति यत् तत् दोषाय'' इति।

एतत् श्रुत्वा महाराजः - ''कोशागारं रिक्तं चेत् करवर्धनं करणीयम् एव खलु ! महाराजेन प्रजानां साहाय्यं करणीयं चेत् प्रजाधनम् आवश्यकं खलु !'' इति पृष्टवान्।

तदा कुमुदः - ''कोशागारं कथं रिक्तं भवति ? राजोद्योगिनः प्रजाधनस्य दुरुपयोगं कुर्वन्तः स्युः इति किमर्थं न चिन्तयति भवान् ? भवतः अधिकारिषु महती अनीतिः प्रवृद्धा अस्ति'' इति उक्तवान्।

एतत् श्रुत्वा महाराजः कोपेन उक्तवान् - ''भवान् यत् वदति तत् सर्वम् असत्यम्। मम राज्ये अनीतिपराः न सन्ति । एकः एव अनीतिमान् अस्ति। सः भवान् एव'' इति।

तदा कुमुदः उक्तवान् - ''अहं कथम् अनीतिमान् भवेयम् ? भवान् सर्वासां प्रजानां कराधारेण राज्यं पालयन् राजा भवितुम् अर्हति। अहं तु केषाञ्चित् एव अनीतिमतां कराधारेण जीवामि। एवं तर्हि अहम् एव खलु श्रेष्ठः ?'' इति।

कुमुदस्य वचनं श्रुत्वा महाराजः स्वदोषं ज्ञातवान्। सः स्वदोषम् अङ्गीकुर्वन् - ''अहम् इतः परं जागरूकतया व्यवहरन् न्याय्येन मार्गेण राज्यपालनं करिष्यामि। स्वार्थपरान् अन्विष्य तेषां योग्यं दण्डनं कारयिष्यामि'' इति कुमुदाय वचनं दत्तवान्।

अनन्तरं कुमुदः स्वस्य अपूर्वाङ्गुलीयकस्य विषयं महाराजं निवेदितवान् । 'तत् अङ्गुलीयकं मह्यं ददातु' इति महाराजः कुमुदम् उक्तवान्। किन्तु कुमुदः अङ्गुलीयकं महाराजाय दातुम् अनिच्छन् - ''एतत् अङ्गुलीयकं सद्यःकाले मम समीपे एव भवति । मम अनन्तरं मम उत्तराधिकारी एतत् प्राप्स्यति। राजन् ! भवता दत्तं वचनं मा विस्मरतु । तदनुगुणम् एव राज्यं पालयतु'' इत्युक्त्वा ततः गतवान्।

मार्गे किञ्चन सरोवरं दृष्टं कुमुदेन । सः अपूर्वम् अङ्गुलीयकं सरोवरे क्षिप्तवान्।

वेतालः एवं कथां समाप्य अवदत् -

"राजन् ! कुमुदस्य व्यवहारः विवेकरहितः इति भाति खलु ! महाराजः असमर्थः प्रजाकण्टकश्च आसीत् । तं ततः निष्कास्य स्वयं राजा भवितु सदवकाशः प्राप्तः आसीत् कुमुदेन । परन्तु स्वबुद्ध्या एव सः निराकृतवान् खलु तम् अवकाशम् ? किमर्थं तथा व्यवहृतवान् कुमुदः ? 'अपूर्वम् अङ्गुलीयकं मम अनन्तरं मम उत्तराधिकारी प्राप्स्यति' इति महाराजसमीपे कुमुदेन उक्तम् आसीत् । किन्तु मार्गे अङ्गुलीयकं सरोवरे क्षिप्तवान् कुमुदः । एषः मूर्खतायाः परमावधिः खलु ? अङ्गुलीयकं यदि महाराजाय अर्पितं स्यात् तर्हि महाराजः सुलभतया स्वार्थपरान् ग्रहीतुम् अशक्ष्यत् खलु ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - "अहं राजा भवेयम् इति कुमुदस्य इच्छा सर्वथा न आसीत् । अतः कुमुदः स्वबुद्ध्या एव राजपदवीं तिरस्कृतवान् इति कथनस्य प्रसक्तिः एव नास्ति । अन्यच्च महाराजः अङ्गुलीयकं पृष्टवान्, किन्तु कुमुदः न दत्तवान् इति कारणतः ज्ञायते यत् कुमुदः न केवलं बुद्धिमान्, महाज्ञानी चापि इति । राजा स्वस्य अधिकारबलेन चातुर्येण च राज्यपालनं कुर्यात्, न तु मन्त्रतन्त्रादिकम् आश्रित्य । एतादृशीं वस्तुस्थितिं कुमुदः स्ववाक्चातुर्येण महाराजं बोधितवान् । किन्तु कुमुदः अङ्गुलीयकात् दुर्लाभं प्राप्तुं न इष्टवान् । अङ्गुलीयकं मत्समीपे, मदनन्तरं मद्वंशीयानां समीपे च तिष्ठति इति यत् उक्तवान् तत् तु राज्ञि तद्वंशीयेषु च भीतिम् उत्पादयितुम् । 'यदि मद्वंशीयाः एतत् अङ्गुलीयकं प्राप्नुयुः तर्हि ते स्वार्थसाधनार्थं तत् उपयुज्य राज्ये अस्थिरताम् उत्पादयेयुः' इति आलोच्य सः तत् सरोवरे क्षिप्तवान्" इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# राजकुमार्याः चातुर्यम्

अवन्तीदेशस्य राजकुमारी अलकावती । सा यदा प्राप्तवयस्का जाता तदा शास्त्रेषु, युद्धविद्यायां, राज्यपालने चापि निपुणा जाता । 'योग्याय राजकुमाराय मम पुत्री दातव्या' इति निश्चित्य तस्याः पिता विविधदेशीयान् राजकुमारान् आहूय तेषां सामर्थ्यस्य परीक्षार्थं बहुविधाः परीक्षाः आयोजितवान् । सर्वासु परीक्षासु विक्रमवर्मा पुष्पदन्तः चेति उभौ राजकुमारौ उत्तीर्णौ जातौ ।

'एतयोः कतरः जामातृत्वेन चेतव्यः ?' इति राज्ञः चिन्ता जाता । बहु विचिन्त्य सः पुत्रीम् उक्तवान् - ''वत्से ! सर्वं भवत्या प्रत्यक्षं दृष्टं खलु ? सर्वासु परीक्षासु जयं प्राप्तवतोः राजकुमारयोः नाम पृथक्पत्रे विलिख्य पात्रे स्थापयिष्यामि । मन्त्रिणां परिवार-सदस्यानां च उपस्थितौ पत्रयोः अन्यतरत् अहं स्वीकरोमि । तस्मिन् यस्य नाम भवति सः भवतीं परिणेष्यति'' इति ।

वस्तुतः तु पुष्पदन्त-विक्रमवर्माणौ यद्यपि समानौ, तथापि विक्रमवर्मणि एव अलकावत्याः अधिकः अनुरागः आसीत् । किन्तु राज्ञः पुष्पदन्ते अधिकप्रीतिः । एषा वार्ता सखीद्वारा अलकावत्या ज्ञाता । तथा एतदपि ज्ञातं यत् राजा चिटिकाद्वये अपि पुष्पदन्तस्य एव नाम लेखितुं व्यवस्थां कृतवान् अस्ति इति ।

अनन्तरदिने सर्वेषां सम्मुखे राजा पत्रद्वययुक्तं सुवर्णपात्रं राजकुमार्याः पुरतः स्थापितवान् । राजकुमारी एकं पत्रं स्वीकृत्य तत् अनुद्घाट्य पितरम् उक्तवती - ''तात ! भाविनः पत्युः नाम्नः पठने लज्जा मम । अतः पात्रे यत् पत्रम् अस्ति तत्र लिखितं नाम भवान् पठतु । तद्भिन्नः एव मम पतिः भविष्यति'' इति ।

पात्रस्थे पत्रे पुष्पदन्तस्य नाम आसीत् एव । अतः विक्रमवर्मा राजकुमार्याः पतिः जातः । उपायेन अनुरागपात्रीभूतम् एव परिणीतवत्याः पुत्र्याः बुद्धिमत्तां दृष्ट्वा राजा नितरां सन्तुष्टः अभवत् ।



# चन्दमामानुबन्धः - ६७

अस्मद्देशीया वृक्षसम्पत् -

## बोधिवृक्षः



सिद्धार्थः बोधिवृक्षस्य अधः उपविश्य दीर्घकालं यावत् तपः आचरन् ज्ञानोदयं प्राप्तवान् । बोधिवृक्षस्य अधः उपविश्य तपः कृतम् इत्यतः तस्य नाम 'बुद्धः' इति जातम् । यत्र सः वृक्षः आसीत् स च प्रदेशः 'बुद्धगया' इति ख्यातः अभवत् । अशोकचक्रवर्ती बौद्धमतस्य अङ्गीकारस्य अनन्तरं स्वपुत्रीं सङ्घमित्रां श्रीलङ्कां प्रति प्रेषितवान् । इतः गमनसमये सा अश्वत्थवृक्षस्य एकां शाखाम् अपि नीतवती । श्रीलङ्कादेशे अनुराधापुरे तां शाखाम् आरोपितवती च । एषा घटना क्रि.पू. २८८ तमे वर्षे प्रवृत्ता । तया आरोपितः वृक्षः २२०० वर्षाणाम् अनन्तरम् इदानीम् अपि तत्र सजीवं तिष्ठति ।

एतस्य वृक्षस्य 'अश्वत्थः' इति नाम संस्कृते इतरभाषासु च प्रसिद्धम् अस्ति । सस्यशास्त्रे (ल्याटिन्भाषया) तु एषः वृक्षः 'फिकस् रिलिजियस लिन्' इति निर्दिश्यते । अश्वत्थवृक्षः परमपवित्रत्वेन भाव्यते लोके । प्रायः देवस्थानानां पुरतः ग्रामसभाभवनस्य पुरतः च एषः वृक्षः वर्ध्यते । एतस्य वृक्षस्य आरोपणं वर्धनं च पुण्यजनकम् इति विश्वासः जनेषु अस्ति । अश्वत्थपूजा अश्वत्थप्रदक्षिणं च जनैः आदरेण क्रियते । एतस्मिन् वृक्षे पावित्र्यभावना अस्तीत्यतः जनाः एतस्य शाखायाः अपि छेदनं न कुर्वन्ति ।

एतस्य मूलानि भूमेः अन्तः सुदीर्घं सुविशालं च प्रसृतानि भवन्ति । एतस्य पर्णानि हृदयाकारेण भवन्ति । मृदूनि मसृणानि चापि भवन्ति । पर्णस्य अन्तर्भागः पुच्छम् इव दीर्घतया कृशतया च भवति । एतानि सदा अधोमुखानि भवन्ति इत्यतः अल्पेन वायुसञ्चारेण अपि शब्दम् उत्पादयन्ति । एतस्य फलानि पक्षिभ्यः विशेषतः रोचन्ते । फलस्थानि बीजानि पक्षिणां द्वारा सर्वत्र प्रसरन्ति । अतः एव प्राचीनभित्तेः मध्ये, शिलानाम् उपरि चापि अश्वत्थसस्यानि उद्भवानि प्रवृद्धानि च दृश्यन्ते ।




# त्रिपिटकाः

**गौ**तमबुद्धस्य जननम्, बोधिवृक्षस्य अधः तस्य ज्ञानोदयः, तस्य शरीरत्यागश्च वैशाखपूर्णिमायाम् एव। अतः एव वैशाखपूर्णिमा बुद्धपूर्णिमा इत्युच्यते। बुद्धपूर्णिमा अस्मिन् वर्षे मे-मासे आसीत्।

'जीवनं दुःखमयम्। ज्ञानिभिः निर्वाणं प्राप्तुं प्रयत्नः करणीयः। यतः तत्र जन्म-मरणादिकं नास्ति' इत्येवं बोधितवान् अस्ति गौतमबुद्धः (क्रि.पू. ५६६ - ४७६)। सः शिष्यान् बोधितवान् यत् दुःखानां मूलम् इच्छाः एव इति, कामनाः परित्यक्ताः चेत् कर्मबन्धनात् मोक्षः, ततः निर्वाणं च प्राप्यते इति च। किन्तु तस्य जीवितकाले एते उपदेशाः लिपिबद्धाः न आसन्। किन्तु बौद्धपण्डिताः तदीयान् उपदेशान् यथावत् स्मरन्तः स्वशिष्यान् उपदिशन्तः आसन्। बुद्धनिर्वाणस्य द्विशतवर्षाणाम् अनन्तरं सम्राट् अशोकः बौद्धपण्डितान् मेलयित्वा तेषां द्वारा बुद्धस्य उपदेशान् लिपिबद्धान् कारितवान्। बुद्धस्य उपदेशाः त्रिभिः भागैः सङ्कलिताः जाताः। ते च भागाः - विनयपिटकः, सुत्त (सूत्र) पिटकः, अभिधम्म (अभिधर्म) पिटकः चेति। अतः ते त्रिपिटकाः इति उच्यन्ते। पिटकशब्दस्य अर्थः 'कण्डोलः' इति।

आध्यात्मिकजीवनार्थम् आवश्यकान् नैतिकनियमान् निरूपयति विनियपिटकः। यस्य जीवनलक्ष्यं निर्वाणं भवति तादृशेन कीदृशं जीवनं यापनीयम् इति विषयं सुत्तपिटकः अभिधम्मपिटकः च निरूपयतः। एतेषु त्रिषु सुत्तपिटकस्यैव अधिकप्राधान्यम्। एतस्मात् एव ४२३ सूत्राणि सङ्गृह्य धम्मपदनामकः ग्रन्थः सङ्कलितः, यश्च लोके नितरां प्रसिद्धः अस्ति।

त्रिपिटकानां भाषा पाली, या च तत्काले व्यवहारे आसीत्। किन्तु इदानीं सा भाषा कैश्चित् एव पण्डितैः अवगम्यते। त्रिपिटकानां सूत्राणि लयान्वितानि सन्ति। गम्भीरभावगर्भितानि चापि सन्ति। उदाहरणार्थं सूत्रद्वयं पश्याम तावत् -

१. द्वेषस्य अन्त्यं द्वेषेण न भवति, अपि तु अद्वेषेण।

२. पुण्यस्य सुगन्धः प्रवहतः वायोः अभिमुखं स्थातुं न अर्हति। किन्तु प्रामाणिकतायाः सुगन्धः (प्रभावः) तु सुखदुःखानि सम्मुखीकुर्वन् दशसु दिक्षु अपि प्रसृतः भवति।

त्रिपिटकाः बौद्धमतस्य आधारग्रन्थाः । बौद्धमते जातककथानाम् अपि विशेषप्राधान्यम् अस्ति । एतासु कथासु बोधिसत्त्वरूपं प्राप्तवतः बुद्धस्य विविधजन्मनां घटनाः निरूपिताः सन्ति । जन्तुरूपेण जीवनं यापितवतः बुद्धस्य जन्मनां विवरणम् अपि एतासु निरूपितम् अस्ति । विविधजन्मनां द्वारा तेन एतस्मिन् प्रपञ्चे यः जीवनानुभवः प्राप्तः सः अपि एतासु निरूपितः अस्ति । बोधिसत्त्वः प्रामाणिकतायाः नीतेः च प्रतीकम् आसीत् । तेन यः धर्ममार्गः आश्रितः सः न केवल भारतीयैः, अपि तु सर्वैः मानवैः अनुसर्तुं योग्यः अस्ति । अतः जातककथाः नीतिबोधने अत्युपकारिकाः सन्ति ।



# भवन्तः जानन्ति वा ?

१. यहूदीयानां राज्यं कः स्थापितवान् ?
२. 'रेडक्रास्' संस्था केन स्थापिता ?
३. दक्षिणामेरिकास्थेन 'बोलिविया' देशेन तदीयं नाम किमर्थं प्राप्तम् ?
४. मोहम्मदवर्यस्य अनुयायी 'खलिफ' इति उच्यते । तादृशः प्रथमः खलीफा कः ?
५. क्विनैन्नामकम् औषधं कस्मात् वृक्षात् प्राप्यते ?
६. कः आक्रमणकारः भारते ऐदम्प्राथम्येन अग्न्यस्त्रस्य उपयोगं कृतवान् ?
७. १९६४ तमे वर्षे साहित्यक्षेत्रे नोबेल्पारितोषिकं प्राप्तवान् प्रसिद्धः फ्रेञ्चतत्त्वज्ञानी कः ?
८. भूमिः गोलाकारेण अस्ति इति सिद्धान्तं पाश्चात्यः कः प्रतिपादितवान् ?
९. चन्द्रस्य स्वयंप्रकाशनशक्तिः नास्ति इत्येतम् अंशम् ऐदम्प्राथम्येन प्रकटितवान् ग्रीकुतत्त्वज्ञानी कः ?
१०. अतिविशालः आफ्रिकन्देशः कः ?
११. बौद्धमतस्य प्रधानं शाखाद्वयं किम् ?
१२. अमेरिकादेशस्य सः अध्यक्षः कः, यश्च एकमासमात्रम् अध्यक्षपदम् अलङ्कृतवान् ?
१३. यूरोपखण्डे कस्यचित् देशस्य राजधानी विंशति द्वीपान् अभिव्याप्य तिष्ठति । सः देशः कः ? तस्य राजधान्याः नाम च किम् ?
१४. पञ्चदशे शतके मुद्रणयन्त्रं कः निर्मितवान् ?
१५. जपानदेशे कः चक्रवर्ती तद्देशस्य संविधानं लिखितरूपेण निरूपितवान् ?
१६. प्रपञ्चे का प्रथमा प्रधानमन्त्रिणी आसीत् ?

# उत्तराणि

१. अब्राहम् ।
२. हेनी डुनाण्ट ।
३. १९२५ तमे वर्षे स्पेन्तः विमुक्तिं सम्पादितवतः सैमन् बोलिवर्वर्यस्य नाम्नः आधारेण ।
४. अबू बेकर ।
५. सिङ्कोनावृक्षात् ।
६. बाबर् ।
७. जीन्पाल् सार्त्रे ।
८. पैथागोरस् ।
९. अनाक्सा गोरस् ।
१०. सूडान् ।
११. हीनयानं महायानं चेति ।
१२. विलियं हेनी हारिसन् (नवमः अध्यक्षः) ।
१३. स्वीडन् । स्टाक् होम् ।
१४. जोहन् गटेन् बर्गस् ।
१५. मैजी चक्रवर्ती ।
१६. सिरिमावो भण्डारनायिके । (श्रीलङ्कादेशीया ।)



# वधूपरीक्षा

रामपुरनामके ग्रामे श्यामसुन्दरः नाम कश्चन धनिकः पुरोहितः आसीत् । तस्य प्राप्तवयस्कः मेघश्यामः नाम पुत्रः आसीत् । 'मेघश्यामः बुद्धिमान्' इति तस्मिन् ग्रामे ख्यातिः आसीत् । अतः पिता श्यामसुन्दरः सङ्कल्पितवान् आसीत् यत् बुद्धिमती एव काचित् सुन्दरी कन्या मम पुत्राय वधूरूपेण आनेतव्या इति । द्वित्रेषु स्थलेषु वधूपरीक्षा कृता अपि । किन्तु ताः कन्याः यद्यपि सुन्दर्यः आसन्, तथापि ताः बुद्धिमत्तया मेघश्यामसमानाः न आसन् इत्यतः श्यामसुन्दरेण न चिताः ।

बहवः धनिकाः अपि मेघश्यामाय पुत्रीं दातुं सिद्धाः आसन् । ते जानन्ति स्म यत् श्यामसुन्दरः सामान्यः पुरोहितः चेदपि मेघश्यामः नितरां बुद्धिमान् इत्यतः अस्मत्पुत्री सुखेन जीविष्यति इति । किन्तु श्यामसुन्दरः एतादृशान् सम्बन्धान् न इष्टवान् । धनेन सुखशान्त्यादिकं क्रेतुं न शक्यते इति सः सम्यक् जानाति स्म ।

एवं स्थिते कदाचित् पाण्डवपुरतः आगतः कश्चित् श्यामसुन्दरस्य बन्धुः उक्तवान् यत् मेघश्यामेन सर्वविधेन अपि समाना सुन्दरी, बुद्धिमती च कन्या मम ग्रामे अस्ति । तस्याः नाम राधा इति । रुद्रशास्त्रिणः पुत्री सा इति ।

तां द्रष्टुम् इच्छन् श्यामसुन्दरः पत्न्या पुत्रेण च सह पाण्डवपुरं प्रति प्रस्थितवान् । अर्धघण्टाभ्यन्तरे तैः पाण्डवपुरं प्राप्तम् । गृहस्य पुरतः शकटं यदा स्थगितं तदा रुद्रशास्त्री द्वारम् उद्घाट्य दृष्टवान् । शकटात् अवतरन् श्यामसुन्दरः तेन दृष्टः ।

रुद्रशास्त्री सम्भ्रमेण शकटसमीपं गत्वा श्यामसुन्दरं नमस्कृत्य - ''भवतः बन्धुः वेङ्कटरमणशास्त्री उक्तवान् आसीत् यत् भवान् अद्य आगच्छति इति'' इति वदन्



एतस्याः बुद्धिमत्ता अपि उत्कृष्टा स्यात् तर्हि एषा मम गृहस्य स्नुषा भवेत् । अतः भवतः अनुज्ञा यदि स्यात् तर्हि मम पुत्रः मेघश्यामः एव एतस्याः बुद्धिमत्तायाः परीक्षां करिष्यति'' इति ।

''मम अनुज्ञा अस्ति एव । मम पुत्री रूपेण यथा, तथैव बुद्धिमत्तया अपि अपूर्वा अस्ति । वधूपरीक्षा वरपक्षीयाणां भवताम् अधिकारः । अतः यथा इच्छा तथा परीक्षां कर्तुम् अर्हन्ति भवन्तः'' इति उक्तवान् रुद्रशास्त्री पुत्रीम् अभिमानेन पश्यन् ।

पितुः नेत्रसङ्केतस्य अनुगुणं राधां प्रथमं प्रश्नं पृष्टवान् मेघश्यामः - ''भवत्याः गृहे दर्पणस्य आजन्मशत्रवः कति सन्ति ?'' इति ।

आदरेण अन्तः नीतवान् ।

अल्पे एव काले रुद्रशास्त्रिणः पत्नी पुत्रीं राधां सम्यक् अलङ्कृत्य अतिथिप्रकोष्ठं प्रति आनीतवती । राधा श्यामसुन्दरं तत्पत्नीं च नमस्कृत्य शिरः अवनमय्य कटे उपविष्टवती । तस्याः सौन्दर्यं विनयपूर्णः व्यवहारः च श्यामसुन्दरस्य सन्तोषाय जातम् ।

रुद्रशास्त्री श्यामसुन्दरम् उक्तवान् - ''श्रीमन् ! मम तिस्रः पुत्र्यः एकः पुत्रः च । एषा राधा ज्येष्ठा । कनिष्ठे उभे, पुत्रः च ह्यः मातुलग्रामं गतवन्तः'' इति ।

तदा श्यामसुन्दरः उक्तवान् - ''भवतः पुत्री रूपवती अस्ति । एतस्याः सौन्दर्यं व्यवहारश्च अस्माकम् इष्टाय अभवत् । यदि

तदा राधा मन्दहासपूर्वकम् उत्तरं दत्तवती - ''मम भगिन्यौ अनुजश्चापि दर्पणस्य मित्राणि एव । दर्पणशत्रुः मम गृहे कोऽपि नास्ति'' इति ।

''स्वविषये किमपि न उक्तम्'' इति हसन् उक्तवान् मेघश्यामः ।

''हस्तस्थं कङ्कणं किं दर्पणे पश्यति भवान् ?'' इति प्रतिप्रश्नं कृतवती राधा ।

''अस्तु तावत्, पूर्वं दर्पणस्य मित्राणि एव सन्तः इदानीं शत्रुतां प्राप्तवन्तः गृहे कति सन्ति ?'' इति पृष्टवान् मेघश्यामः ।

''मित्रत्वेन स्थिता कालान्तरे शत्रुतां प्राप्तवती मम पितामही पूर्वम् आसीत् । एषु दिनेषु सा दिवं गता'' इति उत्तरं दत्तवती राधा ।

"भवत्याः ग्रामे अमावास्या मासे एकवारम् एव, उत तद्दिने अपि पूर्णिमा भवति ?" इति द्वितीयं प्रश्नं पृष्टवान् मेघश्यामः ।

"अस्माकं ग्रामे अमावास्या अपि पूर्णिमायते । वस्तुतः तु अस्मद्ग्रामीणेन केनापि अमावास्या कदापि न दृष्टा" इति उक्तवती राधा ।

"भवत्याः ग्रामे वृष्टिकालमात्रे पक्षिणः क्षेत्रेषु दृश्यन्ते, उत ग्रीष्मकाले अपि ?" इति पृष्टवान् मेघश्यामः ।

"अस्माकं ग्रामे सर्वासु ऋतुषु अपि पक्षिणः क्षेत्रेषु दृश्यन्ते" इति उत्तरं दत्तवती राधा ।

"आ आकाशात् वितानं निर्माय आभूमि कटं प्रसार्य विवाहं निर्वर्तयितुं सिद्धः वा भवत्याः पिता ?" इति हसन् पृष्टवान् मेघश्यामः ।

"नैव । यदि तथा क्रियेत तर्हि अस्मद्गृहसदस्यानाम् आकाशः एव गृहं भवेत्" इति धैर्येण उक्तवती राधा ।

एतावत्पर्यन्तं प्रश्नान् उत्तराणि च शृण्वन् स्थितः श्यामसुन्दरः पुत्रं पश्यन् - "वत्स ! अलम् इतोऽप्यधिकप्रश्नेन । राधा बुद्धिमती इति तु एतावता एव प्रमाणितम् अभवत्" इति उक्त्वा रुद्रशास्त्रिणम् उद्दिश्य सन्तोषेण उक्तवान् - "श्रीमन् ! पञ्चाङ्गदर्शनपूर्वकम् अचिरात् एव विवाहस्य मुहूर्तं निश्चेतुम् अर्हन्ति भवन्तः" इति ।

"मम पुत्र्याः महत् सौभाग्यम् । पुण्यवती



सा" इति सन्तोषेण श्यामसुन्दरम् उक्तवान् रुद्रशास्त्री ।

ततः रुद्रशास्त्रिणः तत्पत्न्याः च अनुज्ञां प्राप्य श्यामसुन्दरः पत्न्या पुत्रेण च सह शकटम् आरूढवान् ।

मार्गे श्यामसुन्दरस्य पत्नी पतिं पृष्टवती - "वधूपरीक्षासन्दर्भे मेघश्यामेन पृष्टाः प्रश्नाः, तया कन्यया उक्तानि उत्तराणि च मया न अवगतानि एव । तयोः प्रश्नोत्तरस्य किं तात्पर्यम् ?" इति ।

तदा श्यामसुन्दरः हसन् - "भवत्या न अवगतम् इति मया तदा एव ज्ञातम् । अस्तु, तयोः कथनस्य आशयं विवृणोमि, शृणोतु । प्रथमं मेघश्यामः पृष्टवान् - 'दर्पणशत्रवः कति सन्ति ?' इति । तस्य तात्पर्यम् - 'आ

जन्मनः कुरूपिणः कति सन्ति ?'' इति। तदा तया बुद्धिमत्या उक्तं यत् मम अनुजः भगिन्यौ च दर्पणस्य मित्राणि एव इति। तन्नाम – 'मम गृहे सर्वे रूपवन्तः एव' इति सा सूचितवती। 'हस्तस्य कङ्कणं किं भवान् दर्पणे पश्यति ?' इति पृच्छन्त्या चतुरया तया सूचितं यत् मम सौन्दर्यं प्रत्यक्षम् एव अस्ति इति।

'पूर्वं दर्पणस्य मित्राणि ततः शत्रुतां प्राप्तवन्तः' नाम तारुण्ये रूपवन्तः अपि वार्धक्यकारणतः कुरूपत्वं प्राप्तवन्तः इत्यर्थः। 'तादृशी वृद्धा मम पितामही पूर्वम् आसीत्। किन्तु सद्यः एव सा दिवङ्गता' इति सूचितवती राधा।

'भवत्याः ग्रामे अमावास्या मासे एकवारम् एव, उत तद्दिने अपि पूर्णिमा ?' इति मेघश्यामेन पृष्टस्य प्रश्नस्य उत्तरं सा उक्तवती यत् मम ग्रामे अमावास्यां दृष्टवन्तः एव न सन्ति इति। एतस्य तात्पर्यं यत् ग्रामे मार्गदीपव्यवस्था सदा सम्यक् एव भवति इत्यतः अन्धकारात् ग्रामे कस्यापि भीतिः नास्ति इति।

ग्रीष्मकाले अपि पक्षिणः क्षेत्रेषु कथं भवितुम् अर्हन्ति ? क्षेत्रेषु सस्योपचयः अस्ति चेदेव खलु ? तत् कथं सम्भवति ? ग्रामे कासार-सरोवर-कूपादिषु जलम् अस्ति चेदेव सस्योपचयः साध्यः। 'अस्माकं ग्रामे सर्वासु ऋतुषु अपि क्षेत्रेषु पक्षिणः भवन्ति' इति वदन्त्या राधया सूचितं यत् अस्माकं ग्रामस्य क्षेत्राणि सदा फलवन्ति एव इति।

अन्तिमप्रश्नस्य आशयः आसीत् यत् अतिव्ययेन महता वैभवेन च भवत्याः पिता विवाहं निर्वर्तयितुं शक्नोति वा ? इति। 'न' इति उक्तं तया। अतिव्ययः कृतः चेत् गृहं विक्रेतव्यं भवेत्, वृक्षस्य अधः वासः करणीयः भवेत् इति तया सूचितम्। अस्माकं भाविनी स्नुषा नितरां बुद्धिमती अस्ति'' इति।

''आम्। रूपवती गुणवती बुद्धिमती च स्नुषा प्राप्ता मया। मम पुत्रस्य अनुरूपा वधूः सा'' इति साभिमानम् उक्तवती श्यामसुन्दरस्य पत्नी।



# र स वा र्ताः




## श्वासनिरोधे नवविक्रमः

'प्राणवायुं विना कश्चित् कियत्कालं जीवेत् ?' इत्येतम् अंशं स्वानुभवात् ज्ञातुं स्वीडन्देशीयेन जूफीसियोलाजिकल् प्रयोगालयेन गते फेब्रवरीमासे २५ तमे दिनाङ्के एकः प्रयोगः कृतः । एतस्य प्रयोगस्य अङ्गतया पीटर् हेर्वेल्नामकः २७ वर्षीयः युवकः मुखे कमपि साधनविशेषम् अधरन् ६. ३ निमेषान् यावत् जले निमग्नः आसीत् । श्वासनिरोधविषये कृतः नूतनः विक्रमः एषः ।

## उत्तरध्रुवं प्रति एकाकितया प्रयाणम्






इंग्लण्ड्देशीयः रूपेक्ट्होडोनामकः कश्चन ३५ वर्षीयः साहसी युवकः मार्च्मासस्य ६ दिनाङ्के उत्तरध्रुवं प्रति एकाकितया पादाभ्यां प्रयाणम् आरब्धवान् अस्ति । तेन सह मार्गदर्शकः कोऽपि नास्ति । शुनकः वाहनं वा तं न अनुसरति । प्राणवायुकोषः वा न नीतः तेन । हण्ट्द्वीपतः उत्तरध्रुवं प्रति १,१०० कि.मी. दूरम् अस्ति । एतं दूरम् एकाकितया एव क्रमितुं सङ्कल्पितवान् अस्ति सः । यदि सः स्वप्रयाणं निर्विघ्नं परिसमाप्य विजयी भवेत् तर्हि एतादृशं प्रयाणं कृतवान् अद्वितीयः स्यात् सः ।

## वाताटोत्सवः

मार्च्मासस्य अन्तिमे सप्ताहे 'थाइल्याण्ड्'देशे 'अन्ताराष्ट्रियः वाताटोत्सवः' प्रवृत्तः । तस्मिन् उत्सवे द्वादशानां देशानां प्रतिनिधयः भागं गृहीतवन्तः । राजधान्यां बाङ्काक्नगर्यां वर्णमयाः वाताटाः उड्डयनम् अकुर्वन् । जर्मनीदेशीयः ७० मीटर्-सेण्टिपेड्युक्तः वाताटः, जपान्देशीयः वारियर्नामकः वाताटः, ५ मीटर्दीर्घश्मश्रुयुक्तः इण्डोनेशियादेशीयः वाताटः, सुवर्णवर्णः मलेशीयादेशीयः वाताटः, रजतवर्णीयः नेपालदेशीयः वाताटः, अमेरिकादेशीयः नौविण्ड्वाताटः च विशेषतः सर्वेषाम् अवधानम् आकर्षन्, सर्वान् अतोषयन् च ।





# पात्रे प्रीतिः

प्राचीने काले श्रावस्तीनगरे सुपुत्रः नाम कश्चन युवकः आसीत् । पितुः मरणस्य अनन्तरं मातृसेवायाम् अत्यासक्तिं प्रदर्शयन् सः धनसम्पादने अनासक्तः आसीत् । एवं चेत् पुत्रस्य भाविजीवनं कष्टमयं स्यात् इति आलोच्य माता कदाचित् उक्तवती - "वत्स ! भवान् अहोरात्रं मम सेवायां निरतः भवति चेत् भवतः जीवनं कथं प्रचलेत् ? अतः भवान् विवाहितः भवतु । भवतः पत्नी मम सेवां करोतु । भवान् च कुत्रचित् कार्यं सम्पाद्य धनम् अर्जयतु" इति ।

मातुः वचनम् आदेशं भावयन् सुपुत्रः रूपवतीनामिकां तरुणीं परिणीतवान् । यथा जनन्यां तथैव पत्न्याम् अपि विशेषप्रीतिं प्रदर्शयति स्म सुपुत्रः । 'जनन्यां मम पत्युः अधिकप्रीतिः' इति जानती रूपवती कदाचित् चिन्तितवती - "मम पतिः मयि जनन्यां चापि प्रीत्यतिशयं प्रदर्शयति । यदि सः जनन्यां प्रीतिं न प्रदर्शयेत् तर्हि मयि इतोऽप्यधिकां प्रीतिं प्रदर्शयेत्" इति । एवं चिन्तयित्वा सा निर्णीतवती यत् जनन्यां मम पत्युः अनादरः यथा उत्पद्येत तथा करणीयम् इति ।

अतः सा पतिम् एकान्ते - "भवतः माता गोमुखव्याघ्री । मयि किञ्चिदपि प्रीतिः नास्ति तस्याः । मम सर्वेषु कार्येषु दोषम् एव पश्यति सा । पादमर्दनं मृदु कृतं चेत् 'मम सेवायां भवत्याः अनासक्तिः' इति वदति । उष्णः पाकः परिविष्टः चेत् 'किम् एतत् ?' इति तर्जयति । तां तोषयितुं मया न शक्यते एव" इति उक्त्वा अश्रूणि स्रावितवती ।

पत्न्याः अश्रूणि कं वा पुरुषं न परिवर्तयति ? पत्न्याः वचने विश्वस्य सुपुत्रः निर्णीतवान् यत् अहं पत्न्या सह सन्तोषेण तिष्ठामि यत् तत् मम माता न

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

सहते इति । अतः सः कदाचित् मातरम् उक्तवान् - "अम्ब ! भवती अत्र सुखेन स्थातुं न शक्नोति । अतः भवती बन्धुगृहे अन्यत्र वा वासं करोतु" इति ।

'एतत्सर्वं स्नुषायाः उपदेशस्य फलम्' इति चिन्तयित्वा माता - "अस्तु तावत्" इति उक्त्वा गृहात् निर्गतवती । तस्मिन् एव ग्रामे स्थिते बन्धुगृहे वासं कुर्वती सा यथाशक्ति तद्गृहकार्याणि कुर्वती निश्चिन्तं दिनानि यापितवती ।

श्वश्र्वाः निर्गमनस्य अनन्तरं रूपवती गर्भवती जाता । नवानां मासानाम् अनन्तरं सा पुत्रं प्रसूतवती । "अहो, मम श्वश्रूः दुष्टा ! यावत् सा अत्र आसीत् तावत् अहं गर्भवती एव न जाता । तस्याः निर्गमनस्य अनन्तरं तु रत्नतुल्यः पुत्रः प्राप्तः मया" इति प्रतिवेशिनीः उक्तवती सा ।

एतस्मिन् वचने केचन विश्वासं प्रदर्शितवन्तः । पुनः केचन वृद्धायाः समीपं गत्वा - "पश्यतु, भवत्याः स्नुषायाः धार्ष्ट्यम् । भवत्याः उपस्थितौ पुत्रोत्पत्तौ विघ्नः आसीत्, भवत्याः निर्गमनानन्तरं पुत्रः प्राप्तः इति सा सर्वान् वदन्ती अस्ति" इति उक्तवन्तः ।

एतानि वचनानि श्रुत्वा वृद्धा नितरां क्रुद्धा । "अहो, कलिप्रभावः ! धर्मः अस्तं गतः । अतः धर्मस्य अन्त्यसंस्कारं करिष्यामि" इति कोपेन वदन्ती तिल-तण्डुल-जलादिकं गृहीत्वा श्मशानं गतवती । पाकम् आरब्धवती च ।

तावता तत्र आगतः कश्चन मुनीश्वरः वृद्धां दृष्ट्वा - "आर्ये ! कः दिवङ्गतः ? किमर्थम्



अत्र श्मशाने पाकः क्रियते भवत्या ?'' इति पृष्टवान्।

''आर्य ! धर्मः दिवं गतः। एषः पाकः पिण्डप्रदानार्थम्'' इति उक्तवती वृद्धा।

''धर्मः दिवं गतः इति ? कथम् एतत् ? केन एषा वार्ता निवेदिता ?'' इति आश्चर्येण पृष्टवान् मुनीश्वरः।

''अन्येन केन किमर्थं वक्तव्यम् ? अधर्मस्य विजृम्भणं स्वयं पश्यामि खलु ? मिथ्यारोपैः स्नुषा मां गृहात् बहिष्कृतवती। इदानीं पुत्रं प्राप्य वदति यत् पूर्वं पुत्रः न जातः यत् तस्य कारणं मम उपस्थितिः एव इति। धर्मः यदि स्यात् तर्हि एवं न अभविष्यत् खलु ?'' इति उक्तवती वृद्धा।

मुनीश्वरः वृद्धायाः मुखात् प्रवृत्तं समग्रं श्रुत्वा - ''एवं तर्हि मम तपश्शक्त्या तौ नाशयिष्यामि'' इति उक्त्वा शापदानार्थं कमण्डलुस्थं जलं हस्तेन गृहीतवान्।

तावता वृद्धा तस्य प्रयत्नं निवारयन्ती - ''आर्य ! अलं शापदानेन। अविवेकिनौ तौ यत् कृतवन्तौ तत् क्षान्तवती अस्मि अहम्। तौ मृतौ चेत् मम पौत्रः अनाथः भविष्यति। एतत् अहं न इच्छामि'' इति उक्तवती।

यः अद्यावधि न दृष्टः एव तादृशे पौत्रे अपि वृद्धायाः प्रीत्यतिशयं दृष्ट्वा - 'अहो माया !' इति स्वगतं वदन् मनसि एव हसन् ततः निर्गतवान् मुनीश्वरः।

एतावता एषा वार्ता ग्रामे सर्वत्र प्रसृता आसीत्। अतः सुपुत्रः रूपवती च पुत्रेण सह धावन्तौ श्मशानम् आगतवन्तौ।

''अम्ब ! किम् एतत् ? आगच्छतु, गृहं गच्छाम तावत्'' इति उक्तवान् सुपुत्रः।

यत् प्रवृत्तं तद्विषये लज्जाम् अनुभवन्ती रूपवती स्वस्य दोषं जानती श्वश्रूम् उद्दिश्य - ''अविवेकेन मया किमपि कृतम्। कृपया क्षाम्यतु माम्'' इति उक्त्वा श्वश्र्वाः पादौ गृहीतवती।

तदा वृद्धा - ''वत्से ! अलं रोदनेन। सर्वं सुखाय एव जातम्'' इति उक्त्वा स्नुषाम् उत्थाप्य सान्त्वयित्वा स्नुषा-पुत्राभ्यां सह गृहं गतवती। पौत्रं लालयन्ती सा सुखेन दिनानि यापितवती।





# वीरः हनूमान्

रामनाम्नः जपं कुर्वन् हनूमान् गन्धमादनपर्वते तपसि लीनः आसीत् । तदा कदाचित् ब्रह्मा आगत्य - ''आञ्जनेय ! कलियुगस्य आरम्भः सद्यः एव भविष्यति । कलिकाले भवतः अत्र स्थितिः कष्टाय भवेत् । क्षीरसागरः तु कालातीतः । अतः भवान् झटिति तत्र गच्छतु'' इति आदिश्य ततः निर्गतवान् ।

क्षीरसागरे शेषतल्पस्य उपरि शयनं कृतवतः विष्णोः पार्श्वे स्थित्वा नारदः तुम्बुरुः गाने मग्नौ आस्ताम् । महर्षिः नारदः स्वस्य महतीनामिकां वीणां वादयन् भक्तिरसपूर्णानि स्तोत्राणि गायन् आसीत् । एतत् असहमानः तुम्बुरुः स्पर्धाभावेन हयग्रीवनामिकां वीणां वादयन् वीणया मृदङ्गध्वन्यादिकम् अपि उत्पादयन् तालप्रधानतया गाने मग्नः आसीत् ।

तुम्बुरुः नारदः चापि चिन्तयतः स्म यत् अहम् एव सर्वश्रेष्ठः इति । स्वस्य सङ्गीतज्ञानस्य विषये गर्वम् अनुभवन्तौ तौ परस्परासूयया परस्परद्वेषेण च व्यवहरतः स्म ।

स्पर्धाव्याजेन आरब्धा तयोः असूया प्रतिक्षणं प्रवृद्धा । परस्परं दूषयन्तौ निन्दन्तौ च तौ सङ्गीतं परित्यज्य कोपेन गर्जन्तौ वीणाम् एव आयुधत्वेन परिकल्प्य परस्परप्रहारे उद्युक्तौ । एवं विवदमानौ तौ विष्णुं सानुरोधम् अपीडयताम् - ''आवयोः कतरः श्रेष्ठः इति भवता वक्तव्यम् एव'' इति ।

तयोः सान्त्वनं कर्तुम् अशक्नुवन् विष्णुः योगनिद्रायां निमग्नः जातः । तथापि तौ



विष्णुम् उभयतः स्थित्वा कर्णसमीपं मुखं नीत्वा उक्तवन्तौ - ''आवयोः कतरः श्रेष्ठः इति भवान् यावत् न वदति तावत् आवाम् इतः न गच्छावः'' इति।

तदा विष्णुः - ''भवन्तौ उभौ अपि मम प्रियौ। भवतोः सङ्गीतम् अहं सदा शृणोमि। अतः कतरः श्रेष्ठः इति निर्णेतुं न शक्नोमि। गन्धमादनपर्वते कश्चन कपिः अस्ति। 'रामः आह्वयति' इति सन्दिश्य तम् अत्र आनयतां भवन्तौ। तस्य कपेः पुरतः भवतोः सङ्गीतज्ञानस्य प्रदर्शनं भवतु। सर्वं परिशील्य सः योग्यं निर्णयं श्रावयिष्यति'' इति उक्त्वा तौ हनूमतः समीपं प्रेषितवान्।

तुम्बुरु-नारदौ कपिविषयं श्रुत्वा आश्चर्यम् अनुभवन्तौ अपि, अन्या गतिः नास्ति इत्यतः गन्धमादनपर्वतम् उद्दिश्य गतवन्तौ। ताभ्यां पर्वतः प्राप्तः।

हनूमता क्रियमाणः रामनामजपः ओङ्काररूपेण तत्र-सर्वत्र प्रसृतः आसीत्। तम् अनुसरन्तौ तुम्बुरुः नारदः च हनूमतः पुरतः स्थितवन्तौ।

हनूमान् नेत्रे निमील्य रामनाम जपन् ध्वनेः वेगं वर्धयन् न्यूनीकुर्वन् सस्वरम् आलापं कुर्वन् इव व्यवहरति स्म। अतः जपसमये विविधाः रागाः श्रूयन्ते स्म। तस्मिन् रागसम्मेलने विविधाः भावाः प्रकटिताः भवन्ति स्म।

'रा...' 'म...' इति अक्षरद्वयम् एव तालगतौ विविधान् लयविन्यासान् करोति स्म। तुम्बुरुः नारदः च तत् अपूर्वं गानं श्रुत्वा नितराम् आश्चर्यचकितौ। 'हनूमान् अद्वितीयः नादोपासकः' इति ज्ञातवन्तौ तौ। यदर्थम् आगतं तत् कार्यम् एव विस्मृत्य तौ हनूमतः पार्श्वे उपविश्य रामनामजपे निरतौ जातौ।

हनूमतः ध्वनिः तु मन्द्रगत्या आसीत्। तुम्बुरु-नारदयोः ध्वनिः हनूमतः ध्वनिना मिलितः न अभवत्। अतः तत्र अपश्रुतिः उत्पन्ना। एतेन हनूमतः तन्मयतायाः भङ्गः जातः। सः झटिति नेत्रे उन्मीलितवान्। सः स्वस्य पार्श्वे नेत्रे निमील्य रामजपे निमग्नौ तुम्बुरुनारदौ दृष्टवान्।

सः झटिति उत्थाय तयोः पादौ स्पृष्ट्वा नमस्कारं कृतवान्।

एतत् ज्ञात्वा तुम्बुरुनारदौ झटिति पादौ

पृष्ठतः आकृष्य - ''महानुभाव ! महात्मना भवता आवयोः पादः स्पृष्टः खलु ? आवां कौ इति जानाति खलु भवान् ? आवां तु तुम्बुरु-नारदौ'' इति उक्तवन्तौ ।

''भवन्तौ यौ कौचित् स्याताम् । रामनाम ये जपन्ति ते सर्वे पूज्याः मम । नमस्करणीयाः ते । रामभक्तानां पादधूलिं शिरसा वहामि अहम् । तेनैव तृप्तिः मम'' इति विनयेन उक्तवान् हनूमान् ।

'एषः हनूमान् सङ्गीतशास्त्रादिषु यथा सुनिपुणः तथैव महान् भक्तितत्परः अपि' इति जानन्तौ तुम्बुरु-नारदौ आश्चर्येण परस्परं मुखं दृष्टवन्तौ ।

''भक्ताग्रेसराः अस्माभिः बहवः श्रुताः दृष्टाः चापि । किन्तु एतादृशः विलक्षणः अपूर्वः च भक्तः पूर्वं कदापि न श्रुतः, न वा दृष्टः । निरन्तरं रामनाम एव जपन् एषः अन्नपानादिकं किम्, इहलोकम् एव विस्मृतवान् अस्ति । रामनामजपे अपूर्वं सङ्गीतम् अपि योजितम् अस्ति इति तु अपूर्वं वैशिष्ट्यम् । 'ये रामनाम जपन्ति ते पापिनः चेदपि मम पूज्याः एव' इति एतस्य या दृष्टिः अस्ति सा अपि असाधारणी एव । एवम् एतस्य हनूमतः चिन्तनम्, आचारः, व्यवहारः इत्यादयः सर्वे अपि अपूर्वाः एव'' इति परस्परम् उक्तवन्तौ तौ ।

अनन्तरम् आगमनोद्देशं स्मरन् तुम्बुरुः - ''आञ्जनेय ! क्षीरसागरं प्रति भवतः आनयनार्थं श्रीरामः आवाम् एतं गन्धमादनपर्वतं प्रति प्रेषितवान् अस्ति । सः क्षीरसागरे शेषशय्यायां शयनं कृतवान् अस्ति'' इति उक्तवान् ।





विष्णुः हनूमन्तम् उद्दिश्य उक्तवान् - "आञ्जनेय ! तुम्बुरु-नारदौ सङ्गीतस्पर्धाम् इच्छतः । तयोः सङ्गीतपाण्डित्यस्य परीक्षार्थं भवान् एव अर्हः इति निश्चित्य अहं भवन्तम् अत्र आनीतवान् अस्मि । तयोः परीक्षणात् पूर्वं भवदीयां गानसुधां किञ्चित् पाययतु तावत्" इति ।

तदा हनूमान् उक्तवान् - "हा हन्त ! कीदृशं वचनम् एतत् ! अहं न सङ्गीतविद्वान् । सरिगमेत्यादीन् सप्त स्वरान् जानामि अहं, तावदेव । अहं वायुपुत्रः इत्यतः वायुसम्बद्धम् एतत् शास्त्रं किञ्चित् एव जानामि । अतः सङ्गीतपाण्डित्यस्य परीक्षां कर्तुं, महामहिमान्वितस्य सकलशास्त्रपारङ्गतस्य च भवतः पुरतः गातुं वा सामर्थ्यं सर्वथा नास्ति मम" इति ।

तदा विष्णुः हसन् - "आञ्जनेय ! सर्वदा भवतः समस्या अस्ति एव यत् भवान् स्वसामर्थ्यं स्वयं कदापि न जानाति इति । सूर्यसकाशात् भवान् सर्वाणि शास्त्राणि, विविधाः कलाः, नव व्याकरणानि च सम्यक् अधीतवान् । किन्तु यावत् अन्येन न स्मार्यते तावत् भवान् स्वशक्तिं न जानाति एव । इदानीम् अहं स्मारयामि । गायतु तावत्" इति उक्तवान् ।

तदानीं हनूमान् स्वस्य नाम्नः प्रथमाक्षरेण हकारेण सम्बद्धेन 'हिन्दोल' रागेण मन्द्रगम्भीरस्वरेण रागालापनं कर्तुम् उद्युक्तः अभवत् । हिन्दोलरागः च विष्णोः प्रियतमः रागः आसीत् ।

"सीता तस्य पादसेवां कुर्वती अस्ति । लक्ष्मणः सहस्रफणात्मकं छत्रं तदुपरि प्रसारितवान् अस्ति । भरतशत्रुघ्नौ शङ्खचक्ररूपं धृत्वा तस्य हस्तालङ्कारतां प्राप्तवन्तौ स्तः" इति उक्तवान् नारदः ।

हनूमान् महता आनन्देन तौ अनुसृतवान् । क्षीरसागरे गरुडः अग्रे आगत्य हनूमन्तम् आदरेण प्रीत्या च स्वागतीकृतवान् । ततः हनूमतः स्कन्धयोः उपरि हस्तं प्रसार्य योगक्षेमादिकं पृच्छन् तं विष्णुसमीपं नीतवान् ।

भगवान् विष्णुः रामः इव एव दृष्टः हनूमता । रामः विष्णोः एव अंशभूतः इत्येतम् अंशं स्मरन् सः भक्त्या तं नमस्कृतवान् ।

तुम्बुरुनारदौ स्वरमाधुर्यं दृष्ट्वा, हनूमतः सङ्गीतपाण्डित्यम् अवगत्य सम्भ्रमाश्चर्येण कर्णौ विशालीकृत्य तन्मयतया सर्वं श्रुतवन्तौ ।

हनूमान् हिन्दोलरागं वैजयन्तीरागेण परिवर्तयन् गानम् अनुवर्तितवान् । 'रा' 'म' इति अक्षरद्वयम् एव आश्रित्य सः स्थायिभेदेन, विविधरागभेदेन, तालभेदेन च गायति स्म । तस्य गानस्य अनुगुणं समुद्रस्य तरङ्गाः अपि नृत्यम् अकुर्वन् । तदीयं गानं श्रोतॄणां हृदये आनन्द-तरङ्गान् उद्भावयत् । तुम्बुरुनारदौ अनुभवैकवेद्यया अलौकिकया अपूर्वया भक्तिभावनया युक्तौ जातौ ।

हनूमान् तारस्थायिनम् आश्रितवान् । तदा क्षीरसमुद्रस्य तरङ्गाः उद्गत्य नक्षत्रलोकम् अस्पृशन् । आदिशेषस्य सहस्रं फणाः अकम्पन्त । हनूमान् झटिति मन्द्रस्थायिनम् आश्रित्य देवगान्धाररागस्य आलापनं कृतवान् ।

शान्तिप्रधानस्य तस्य रागस्य कारणतः क्षीरसमुद्रः घनीभूतः सन् हिममयः जातः । तुम्बुरोः हयग्रीववीणा, नारदस्य महतीवीणा च नवनीते स्थितायाः शलाकायाः गतिम् प्राप्तवत्यौ । क्रमशः क्षीरसागरः शिला इव घनरूपः जातः । तन्मध्यस्थः आदिशेषः कष्टेन अकम्पत ।

'गानं स्थगयतु' इति सङ्केतेन हनूमन्तं सूचितवान् विष्णुः । हनूमान् गानं स्थगितवान् । एतेन नितरां चकितौ तुम्बुरु-नारदौ अमृतशिला इव दृश्यमाने क्षीरसमुद्रे स्थितां स्ववीणां दृष्टवन्तौ ।





"भवन्तौ गानेन समुद्रं द्रवीकृत्य स्ववीणां स्वीकर्तुम् अर्हतः" इति तौ हसन् उक्तवान् विष्णुः ।

नारदस्य भक्तिसाहित्यं, तुम्बुरोः वर्षोपलपातनसमर्थः रागः वा अमृतशिलामयं समुद्रं द्रवीकर्तुं न अशक्नोत् । अतः पूर्वं गर्वेण व्यवहृतं यत् तदर्थं तौ लज्जाम् अनुभवन्तौ शिरः अवनमय्य मौनं स्थितवन्तौ ।

विष्णोः आदेशस्य अनुगुणं हनूमान् पुनरपि गातुम् उद्युक्तः जातः । सः भूपाल-वसन्त-जञ्झूटी-दीपकप्रभृतिभिः रागैः रामनाम गीतवान् ।

तदा रागः रागिणी च मूर्तरूपं प्राप्य नृत्यं कृतवन्तौ । हनूमतः गानं तारस्थायिनं प्राप्य प्रलयकम्पनम् अकरोत् । शिवः डमरुं वादयन् ताण्डवनृत्यं कुर्वन् कैलासतः क्षीरसमुद्रम् आगतवान् । तम् अनुसरन्तः पार्वती, गणपतिः, प्रमथादिगणः च तत्र आगतवन्तः । ब्रह्मा पद्मासनात् अवतीर्य तत्र उपस्थितः अभवत् । तम् अनुसरन्ती सरस्वती वीणां वादयन्ती तत्र उपस्थिता जाता । इन्द्रादिदेवताः अपि तत्र उपस्थिताः । क्षीरसमुद्रः तरङ्गैः कम्पमानः जातः ।

समग्रः क्षीरसागरः एव विवाहमण्डपः इव अशोभत । लक्ष्मी-नारायणौ नव वधूवरौ इव दृष्टौ हनूमता । सीता-रामयोः विवाहवैभवं स्मरन् हनूमान् गाने लीनः सन् आनन्दपरवशः जातः ।

तुम्बुरु-नारदौ स्ववीणां स्वीकृतवन्तौ । आदिशेषः स्वस्थतां प्राप्य शय्यास्थितिं समीकृतवान् ।

"हनूमता गीतः एषः रागः 'हनूमद्गानम्' इति प्रसिद्धिं प्राप्य चिरकालं लोके स्थास्यति । पण्डितानां पामराणां च मनः आकर्षन् तेषां हृदयेषु चिरं स्थास्यति । कलायाः सार्थक्यं नाम श्रोतॄणां हृदये स्थितिः एव । तादृशी स्थितिः हनूमद्गानेन प्राप्ता अस्ति । नारदस्य सङ्गीतं भावप्रधानम् । तुम्बुरोः गानं तालप्रधानम् । भाव-राग-तालानां समन्वयः एव नितरां श्रेष्ठः । रागः सङ्गीतस्य आत्मा इव । रसात्मकः सः श्रोतॄणां मनस्सु विशेषप्रभावं जनयति । हनूमद्गानं भावतालसमन्वितं चेदपि रागप्रधानम् आसीत् इत्यतः तत् सदा

जनरञ्जकं भविष्यति'' इति निर्णयं श्रावितवती भगवती सरस्वती ।

ततः ब्रह्मा अग्रे आगत्य उक्तवान् - ''आञ्जनेय ! भवान् कामपि अपेक्षाम् अकृत्वा एव तपः आचरितवान् चेदपि तपसः अनुगुणं फलं तु प्राप्तव्यम् एव खलु भवता ? ब्रह्मपदवी अपि भवतः तपसः फलाय न अलम् । तथापि ततोऽपि श्रेष्ठम् अन्यत् नास्ति इत्यतः तदेव दीयते मया । अग्रिमे कल्पे भवान् एव ब्रह्मा भविष्यति । भवतः मानवानां सृष्टिः भविष्यति'' इति ।

अनन्तरं शिवः अग्रे आगत्य उक्तवान् - ''आञ्जनेय ! इदानीं लोके सज्जनानाम् अपेक्षया दुर्जनाः एव अधिकतया दृश्यन्ते । जनाः अहङ्कारेण व्यवहरन्तः मानवत्वं विस्मृतवन्तः इत्यतः एषा स्थितिः लोके निर्मिता । भवान् कपिकुले जातः चेदपि सदा रामध्याने निमग्नः भवति । अतः भवतः सृष्टौ रामसदृशाः परिपूर्णमानवाः, सीतासदृश्यः कुलस्त्रियः, लक्ष्मणसदृशाः अपूर्वसहोदराः च भविष्यन्ति । अग्रिमकल्पारम्भं यावत् भवान् विष्णुसान्निध्ये तिष्ठतु'' इति ।

तदा ब्रह्मा उक्तवान् - ''आञ्जनेय ! शिवेन युक्तम् एव उक्तम् । सज्जनानां सङ्ख्या यदा अधिका भवति तदा केचन दुर्जनाः जाताः चेदपि न हानिः । तान् उपदेशादिना, अन्येन मार्गेण वा सन्मार्गम् आनेतुं शक्यते । भवतः सृष्टौ एतत् भवतु । अग्रिमे कल्पे विष्णोः नाभितः नूतनं कमलम् उद्भूय विकसिष्यति । भवान् ब्रह्मत्वं प्राप्य तत् पद्मासनं अलङ्करिष्यति । भविष्यद्ब्रह्मा सृष्टिकर्ता भवान् एव'' इति ।

सर्वे देवाः हनूमन्तं सानुरोधं प्रार्थितवन्तः यत् मङ्गलगानं गातव्यम् इति ।

एतत् अङ्गीकुर्वन् हनूमान् श्रीरागेण मङ्गलगानं गीतवान् ।

हनूमान् नारद-तुम्बुरु-गरुडैः सह क्षीरसागरे तिष्ठन् विष्णोः सान्निध्यसुखम् अनुभवन् लक्ष्मी-नारायणौ एव सीता-रामौ भावयन् तौ सेवमानः तिष्ठति । हनूमान् चिरञ्जीवी । अग्रिमकल्पे सः एव ब्रह्मदेवः भविष्यति । (समाप्तम्)






# चण्डः पतिः चण्डी पत्नी च

कमलापुरे देवेन्द्रः नाम कश्चित् आसीत्। तस्य पत्नी इन्द्राणी। तौ सदा कलहं कुरुतः स्म।

एतत् दृष्ट्वा जनाः वदन्ति स्म यत् चण्डः पतिः, चण्डी पत्नी च इति। अल्पाल्पविषयम् अधिकृत्य अपि तयोः कलहः सदा भवति स्म। गृहे शान्तिः नाम्ना अपि न आसीत्।

कदाचित् कश्चन मार्जारः रात्रौ वातायनमार्गेण गृहं प्रविश्य देवेन्द्रस्य मञ्चस्य अधः तिष्ठन् 'म्यॉव् म्यॉव्' इति शब्दम् अकरोत्।

एतेन नितरां क्रुद्धः देवेन्द्रः पत्नीम् उत्थाप्य उक्तवान् – "अये अलस-शिखामणे! कुम्भकर्णभगिनि! शयनात् पूर्वं सर्वाणि वातायनानि पिधातव्यानि इति सदा वदामि। किन्तु भवती मम वचनं तृणाय मन्यते। पश्यतु इदानीम्। वातायनद्वारा मार्जारः प्रविष्टः। एतं भवती एव गृहात् बहिः प्रेषयतु" इति।

"कः एषः मध्यरात्रे भवतः कोलाहलः? मार्जारध्वनितः यदि भवता निद्रा न प्राप्यते तर्हि भवान् एव तं बहिः प्रेषयतु। अहं तु निद्राभङ्गं न सहे" इति वदन्ती आच्छादकेन मुखम् आच्छाद्य सुप्तवती इन्द्राणी।

'मार्जारप्रेषणं मया एव करणीयम् अभवत्' इति चिन्तयन् देवेन्द्रः एकं वेत्रदण्डं गृहीत्वा मार्जारं ताडयितुम् उद्युक्तः। मार्जारः ततः पलाय्य पार्श्वप्रकोष्ठं गतवान्। देवेन्द्रः धावन् तम् अनुसृतवान्। मार्जारः स्वागतप्रकोष्ठं प्राविशत्। दण्डं गृहीत्वा देवेन्द्रः अपि तत्र गतवान्।

मार्जारः पुनः अन्तर्भागं यथा न प्रविशेत् तथा प्रधानद्वारं पिधाय देवेन्द्रः गृहस्य मुखद्वारम् उद्घाटितवान्। मार्जारः 'म्यॉव् म्यॉव्' इति शब्दं कुर्वन् गृहात् निर्गत्य अन्धकारे कुत्रापि निलीनः जातः।



यावत् देवेन्द्रः मुखद्वारं पिधातुम् उद्युक्तः तावता दृढकायौ उभौ चोरौ तस्य अभिमुखम् आगत्य स्थितवन्तौ । "आवाम् एव मार्जारं वातायनमार्गेण अन्तः प्रेषितवन्तौ । मार्जारस्य बहिः प्रेषणार्थं कोऽपि मुखद्वारं पृष्ठभागद्वारं वा उद्घाटयिष्यति एव इति जानीवः आवाम्" इति वदन्तौ तौ दण्डहस्तौ गृहस्य अन्तः आगतवन्तौ ।

देवेन्द्रः भयेन कम्पमानः जातः । भीत्या सः क्रन्दनं कर्तुं यावत् उद्युक्तः तावता कश्चन चोरः क्रोधेन उक्तवान् - "अये ! यदि मुखात् कोऽपि स्वरः निर्गच्छेत् तर्हि मुण्डं रुण्डात् पृथक्कृतं स्यात्" इति ।

तौ देवेन्द्रं रज्ज्वा स्तम्भे बद्धवन्तौ । तदा देवेन्द्रः तौ उक्तवान् - "मम बन्धनार्थम् एव समग्रां रज्जुं मा व्ययीकुर्वन्तु । यतः शयनप्रकोष्ठे मम पत्नी अस्ति । सा स्थूलकाया" इति ।

"हुं, महिलाम् अहं दृष्टिबलात् एव भाययितुं निग्रहीतुं च शक्नोमि" इति वदन् हसितवान् तयोः अन्यतरः कृष्णवर्णीयः चोरः ।

सः ततः शयनप्रकोष्ठं गतवान् । आगतः पतिः एव इति भावयन्ती इन्द्राणी पार्श्वपरिवर्तनं कुर्वती तन्द्रामिश्रितेन स्वरेण - "मार्जारप्रेषणार्थम् एतावान् समयः आवश्यकः वा ? भवता मार्जारः प्रेषितः, उत व्याघ्रः ?" इति पृष्टवती ।

"व्याघ्रः तेन न प्रेषितः । आपद्व्याघ्रः उपस्थितः अस्ति । भवत्याः पत्युः स्थितिं स्वयं नेत्राभ्यां पश्यतु तावत्" इति वदन् तस्याः कण्ठस्य उपरि दण्डं स्थापितवान् कृष्णचोरः ।

इन्द्राणी भीत्या कम्पमाना जाता । तस्याः निद्रा दूरं पलायिता । चोरेण सह मौनं प्रकोष्ठात् बहिः आगता सा पत्युः दुर्दशां दृष्ट्वा महता सन्तोषेण - "साधु कृतम् । यत् करणीयम् इति अहं बहोः कालतः चिन्तयन्ती आसं तदेव कृतं भवद्भ्याम्" इति उक्तवती ।

एतत् श्रुतवतोः चोरयोः मुखं विकसितं जातम् । 'पतिपत्न्योः सम्बन्धः उत्तमः नास्ति । अतः आवयोः कार्यम् अत्र निर्विघ्नं प्रचलिष्यति' इति निर्णीतवन्तौ तौ चोरौ ।

एकः चोरः ताम् उक्तवान् - "अये, अलं

हासेन। गृहे यानि आभरणादीनि सन्ति तानि सर्वाणि अर्पयतु'' इति।

''मम गृहे आभरणादीनि कथं भवेयुः ? एतस्मिन् गृहे जीर्णानि पात्राणि वस्त्राणि च सन्ति, तावदेव। किन्तु हाँ, ह्यः मम पतिः वेतनधनम् आनीय उपधानस्य अधः गोपितवान् अस्ति । विवाहानन्तरम् एतावन्ति वर्षाणि अतीतानि चेदपि एषः स्ववेतनं कियत् इति अद्यावधि मां न उक्तवान्। अतः भवन्तः तं धनस्यूतम् आनीय तस्य अन्तः कियत् धनम् अस्ति इति मां वदन्तु'' इति उक्तवती इन्द्राणी।

तदा देवेन्द्रः क्रोधेन - ''अये, राक्षसि ! वेतनं समग्रं चोराधीनं कुर्वती अस्ति खलु भवती ! इतःपरम् आमासं किम् उपवासम् आचर्यते भवत्या ?'' इति पृष्टवान्।

''मासं यावत् मातृगृहे स्थित्वा आगमिष्यामि। अतः न काऽपि चिन्ता मम'' इति उक्तवती इन्द्राणी।

कृष्णचोरः शयनप्रकोष्ठात् धनस्यूतम् आनीय - ''भगिनि ! इदानीं धनं गणयितुं समयः नास्ति। अतः अस्माकं वासस्थानं गुहां गत्वा धनं गणयित्वा कियत् अस्ति इति अग्रिमायाम् अमावास्यायां भवतीं वदिष्यामि'' इति इन्द्राणीम् उक्तवान्।

''भवतु नाम। यदा शक्यते तदा मां वदतु भवान्। अग्रज ! अङ्गुलीयकं विना भवतः अङ्गुली शोभाहीना दृश्यते। मम मातृगृहात् एतस्मै वराकाय वज्राङ्गुलीयकं दत्तम्। तत् धर्तुं पत्नीपीडकस्य एतस्य नास्ति



अधिकारः। अतः तत् भवान् स्वीकरोतु तावत्'' इति उक्तवती इन्द्राणी।

चोरः झटिति अग्रे गत्वा देवेन्द्रस्य अङ्गुल्यां स्थितम् अङ्गुलीयकं बलात् स्वायत्तीकृतवान्।

तदा देवेन्द्रः कोपेन उक्तवान् - ''चोरभयात् एषा सर्वाणि आभरणानि पेटिकायां निधाय पेटिकां कूपे स्थापितवती अस्ति। यदा उत्सवः आगच्छति तदा कूपं प्रविश्य आभरणानाम् आनयनेन, उत्सवानन्तरं पुनः स्थापनेन च अहं नितरां श्रान्तः अस्मि। कृपया तानि आभरणानि नयन्तु भवन्तः। मां च कष्टात् रक्षन्तु'' इति।

''धिक् भवन्तम्। मम मातृगृहात् दत्तानि



'एषः उपायः आवयोः मनसि न स्फुरितः आसीत् । एतया बहु उपकृतम्' इति चिन्तयन्तौ चोरौ देवेन्द्रस्य मुखं वस्त्रेण पूरितवन्तौ ।

श्वेतचोरः कूपं प्रविष्टवान् । तत्समये इन्द्राणी अश्रूणि मार्जयन्ती कृष्णचोरसमीपम् आगत्य उक्तवती - "दुष्टः मम पतिः मम मातृगृहीयैः दत्तानाम् आभरणानां स्थापनस्थानं सूचितवान् । एवं स्थिते तस्य मात्रा दत्तानाम् आभरणानां रहस्यस्थानं मया किमर्थं न वक्तव्यम् ? तदीया माता काशीयात्रार्थं गमनात् पूर्वम् एतस्मै बहूनि आभरणानि दत्तवती । तानि एषः गृहस्य अट्टे प्रकोष्ठे स्थापितवान् अस्ति । भवान् तानि अपि स्वीकरोतु" इति ।

"एवं वा ? भवती तं प्रकोष्ठं मह्यं प्रदर्शयतु" इति त्वरायुक्तेन स्वरेण उक्तवान् कृष्णचोरः । इन्द्राणी तं प्रकोष्ठसमीपं नीतवती ।

यदा चोरः प्रकोष्ठं प्रविष्टवान् तदा सा झटिति द्वारं पिधाय कीलितवती । चोरः प्रकोष्ठे बद्धः जातः ।

अनन्तरं सा देवेन्द्रसमीपम् आगत्य तस्य मुखात् वस्त्रम् अपनीय तं बन्धविमुक्तं कृत्वा हसन्ती उक्तवती - "उभौ अपि चोरौ बद्धौ । इतःपरम् आवां सूर्योदयपर्यन्तं निश्चिन्ततया निद्रां कर्तुं शक्नुवः" इति ।

देवेन्द्रः आश्चर्येण पृष्टवान् - "तौ इदानीं कुत्र ?" इति ।

"एकः पाताले । अपरः आकाशे" इति

आभरणानि अपि चोराधीनानि कुर्वन् अस्ति खलु भोः भवान् ! धिक् पत्नीद्वेषिणम् ! धिक् अविवेकिनम्" इति अश्रूणि स्रावयन्ती पतिम् उक्तवती इन्द्राणी ।

"अये, अलं कोलाहलेन ! प्रथमम् आवाभ्यां सह कूपसमीपम् आगच्छतु" इति आदिष्टवान् श्वेतचोरः ।

तदा देवेन्द्रः हसन् उक्तवान् - "सम्यक् तर्जयित्वा एतद्द्वारा कार्याणि कारयन्तु भवन्तः" इति ।

"यदा वयं पृष्ठभागस्थस्य कूपस्य समीपं गच्छामः तदा एषः आक्रोशनेन जनान् मेलयेत् । अतः एतस्य मुखं वस्त्रेण पूरयन्तु" इति वदन्ती जीर्णवस्त्रम् आनीय दत्तवती इन्द्राणी ।

साभिनयम् उक्तवती इन्द्राणी।

''भवती सर्वदा अस्पष्टतया एव वदति। स्पष्टं वदतु तावत् तौ कुत्र इति'' इति उक्तवान् देवेन्द्रः।

इन्द्राणी प्रवृत्तं समग्रं निवेदितवती। सर्वं श्रुत्वा उक्तवान् देवेन्द्रः - ''धिक् भवत्याः मूर्खताम्। एतावता चोरः कूपात् बहिः आगतवान् स्यात्'' इति।

''कृष्णचोरं वस्तुप्रकोष्ठं प्रति नयनात् पूर्वम् एव अहं रज्जुं कूपे क्षिप्तवती। अतः श्वेतचोरस्य कूपः एव शरणम्'' इति हसन्ती उक्तवती इन्द्राणी।

प्रातः देवेन्द्रः ग्रामाधिकारिणं वार्तां निवेदितवान्। भटैः सह आगतः ग्रामाधिकारी चोरौ बद्धवान्। चोराभ्यां स्वीकृतं धनम् अङ्गुलीयकं च प्रतिदापितवान् सः।

एतौ प्रसिद्धौ चोरौ आस्ताम्। भूस्वामी घोषितवान् आसीत् यत् यः एतयोः ग्रहणे साहाय्यं करोति तस्मै अमूल्यं पारितोषिकं दीयते इति।

अतः देवेन्द्रः पत्नीम् उक्तवान् - ''आभरणपेटिका कूपे अस्ति इति मया कल्पयित्वा उक्तम्। अतः चोरयोः ग्रहणं जातम्। तदर्थं पारितोषिकं मया स्वीक्रियते'' इति।

''बहुपूर्वम् एव दिवङ्गतया श्वश्र्वा आभरणानि दत्तानि इति मिथ्या वदन्त्या मया चोरः प्रकोष्ठे बद्धः। उभौ अपि चोरौ मया उपायेन गृहीतौ। अतः मया एव पारितोषिकं स्वीक्रियते'' इति उक्तवती इन्द्राणी।

एवं तयोः वाद-विवादः प्रवृद्धः।

''परस्परं कलहं कुर्वन्तौ अपि भवन्तौ अपूर्वं कार्यं कृतवन्तौ। यदि भवन्तौ प्रीत्या व्यवहरन्तौ तिष्ठतः तर्हि भवत्समानाः लोके न भविष्यन्ति एव'' इति हसन् उक्तवान् ग्रामाधिकारी।

ततः चोरौ कारागारे स्थापितौ। भूस्वामिना दत्तं धनं द्विधा विभज्य उभयोः कृते अपि दत्तवान् ग्रामाधिकारी। भूस्वामी तयोः सम्माननम् अपि कृतवान्।





# समस्यापरिहारः

रागप्रियस्य महती इच्छा यत् मया अपि समीचीनतया गानं करणीयम् इति। तेन सङ्गीताभ्यासः तु न कृतः आसीत्। अतः सः यदा गानस्य आरम्भं करोति तदा श्रोतारः नीरसताम् अनुभवन्ति स्म।

रागप्रियस्य काचित् पितामही आसीत्। तस्याः कण्ठः सुमधुरः। सा सङ्गीतज्ञा अपि। कदाचित् रागप्रियः तां प्रार्थितवान् - 'मां गानं बोधयतु' इति। तदा सा उक्तवती - "भवान् इदानीम् एव सम्यक् गायति" इति।

"भवती एव वदति। किन्तु श्रोतॄणां प्रतिक्रियातः मया ज्ञायते एव यत् मम गानं तेभ्यः न अरोचत इति" इति खेदेन उक्तवान् रागप्रियः।

"यदा अहम् अल्पवयस्का आसं तदा ममापि स्थितिः एवम् एव आसीत्। इदानीम् अहं ज्येष्ठा अस्मि। अतः सर्वे आदरेण मम गानं शृण्वन्ति। भवान् यदा ज्येष्ठत्वं प्राप्स्यति तदा सर्वे भवतः गानं श्रोष्यन्ति एव" इति उक्तवती पितामही।

"अहो! तावत्कालं प्रतीक्षां कर्तुं सर्वथा न शक्नोमि अहम्। इदानीम् एव मां गानं पाठयतु भवती" इति उक्तवान् रागप्रियः।

"अहं गानमात्रं जानामि, न तु गानपाठनम्। यतः मया सङ्गीतं गुरुमुखात् न अधीतम्। अहं भवन्तं पाककलां बोधयितुं तु शक्नोमि" इति उक्तवती पितामही।

"किं पाककलया? अहं सङ्गीतपाठम् अपेक्षितवान्। भवती पाककलाबोधनं वदन्ती अस्ति" इति खेदेन उक्तवान् रागप्रियः।

"पाककला ज्ञाता चेत् सा भवतः अपेक्षायाः पूरणे सहायिका भवति। रुचिकरः पाकः सज्जीकृतः चेत् भोजनेच्छया बहवः भवत्समीपम् आगमिष्यन्ति।

भोजनानन्तरं दाक्षिण्यवशात् सङ्गीतं श्रोष्यन्ति एव'' इति उक्तवती पितामही ।

''तदर्थं मया पाकः किमर्थं ज्ञातव्यः ? पाकार्थं कञ्चित् कर्मकरं नियोजयिष्यामि'' इति उक्तवान् रागप्रियः ।

''पाचकः निश्शुल्कं कार्यं न करोति खलु ? आजीवनं किं पाचकाय धनं दातुं शक्नुयात् भवान् ? अतः भवता पाककला ज्ञातव्या एव'' इति उक्तवती पितामही ।

पितामह्याः उपदेशस्य अनुगुणं पाककलां ज्ञातवान् रागप्रियः । षोडशे वयसि एव सः पाकनिपुणः जातः ।

''इतः परम् अहं पाकं कृत्वा जनान् भोजयन् सङ्गीतं श्रावयामि वा ?'' इति कदाचित् पितामहीं पृष्टवान् रागप्रियः ।



''अलम् अविवेकेन । तथा कृतं चेत् भवन्तं, मां च गृहात् बहिष्कुर्यात् भवतः पिता । अतः प्रथमं धनसम्पादनमार्गं चिन्तयतु । रुचिकराणि खाद्यानि निर्माय तेषां विक्रयणं करोतु । ततः धनं प्राप्यते'' इति बोधितवती पितामही ।

''मया या पाककला अधीता सा धनसम्पादनार्थं न, अपि तु सङ्गीतं श्रावणीयम् इति उद्देशेन'' इति कोपमिश्रितस्वरेण उक्तवान् रागप्रियः ।

''तदर्थम् एव खलु अहं वदामि ? खाद्यनिर्माणक्षेत्रे भवता प्रसिद्धिः प्राप्ता चेत् भवतः गानं श्रोतुं जनाः अहमहमिकया आगच्छेयुः ।'' इति उक्तवती पितामही ।

एषः उपायः रागप्रियाय अरोचत । वर्षाभ्यन्तरे एव सः मधुरखाद्यापणम् आरब्धवान् । प्रतिदिनं सः कांश्चित् गृहम् आनीय गानानि श्रावयित्वा रुचिकराणि खाद्यानि परिवेषयति स्म । आरम्भे तु जनाः अधिकतया आगतवन्तः । किन्तु दिनेषु गतेषु जनानां सङ्ख्यायां न्यूनता दृष्टा । केचन भोजनसमयमात्रे उपस्थिताः भवन्ति स्म, न तु गानसमये । अन्ते सर्वे श्रोतारः सम्भूय सङ्घं निर्माय निर्णीतवन्तः यत् पर्यायक्रमेण प्रतिदिनम् एकैकेन रागप्रियस्य गानं श्रोतुं गन्तव्यम् इति ।

यस्य पर्यायः भवति सः बकासुरसमीपं गच्छन् चक्रपुरवासी इव, सिंहसमीपं गच्छन् पशुः इव अनिच्छया एव गत्वा कथमपि कर्तव्यं निर्वाह्य आगच्छति स्म । रागप्रियस्य



पाकं त्यक्तुम् अनिच्छन्तः ते भोजनार्थम् आगमनं तु न परित्यक्तवन्तः, तावदेव ।

श्रोतृभिः कृता व्यवस्था ज्ञाता रागप्रियेण । सः नितरां खिन्नः । एतत् ज्ञात्वा पितामही उक्तवती - "तर्हि एवं भवतु । प्रतिदिनं गानं मास्तु । सप्ताहे एकवारं गानकार्यक्रमः भवतु । भजनकार्यक्रमः प्रतिसप्ताहं प्रचलति इति प्रचारं करोतु । कार्यक्रमानन्तरं प्रसादवितरणं भवतु । तदा जनाः अधिकसङ्ख्यया आगमिष्यन्ति । भवतः इष्टं च सेत्स्यति" इति ।

एवम् एव अनुष्ठितं रागप्रियेण । कानिचन दिनानि एषा व्यवस्था सम्यक् एव प्रवृत्ता । किन्तु पुनरपि सङ्ख्यायां ह्रासः दृष्टः ।

रागप्रियः पुनरपि खिन्नः जातः । तदा पितामही सूचितवती - "विद्यावान् अपि भवान् ग्रामे प्रसिद्धिं, प्रगतिं वा साधयितुं न शक्नोति । अतः नगरे मधुरखाद्यापणस्य आरम्भं करोतु । नगरे तु कार्यरहिताः बहवः भवन्ति । भोजनं दीयते चेत् बहवः सङ्गीतं श्रोतुम् आगमिष्यन्ति एव" इति ।

पितामह्याः सूचनायाः अनुगुणं रागप्रियः नगरे आपणम् आरब्धवान् । पितामही तेनैव सह वासं कृतवती । ग्रामे यः अनुभवः सः एव अनुभवः रागप्रियेण प्राप्तः नगरे अपि । अत्रापि श्रोतारः विरलाः जाताः ।

मध्याह्नसमये रागप्रियस्य आपणे ग्राहकाः विरलतया भवन्ति स्म । तत्समये कश्चन भिक्षुकः आपणस्य पुरतः स्थित्वा खाद्यानि आशायुक्तया दृष्ट्या पश्यति स्म । कानिचन दिनानि एवम् एव प्रवृत्तम् ।

कदाचित् रागप्रियः तम् आहूय उक्तवान् - "यदि भवान् मम गानं शृणुयात् तर्हि भवते प्रतिदिनं भोजनं दद्याम्" इति ।

भिक्षुकः एतत् अङ्गीकृतवान् । रागप्रियः प्रतिदिनं कानिचन गीतानि श्रावयित्वा भोजनं दत्त्वा तं प्रेषयति स्म ।

उत्तमः श्रोता प्राप्तः इति सन्तुष्टः अभवत् रागप्रियः । किन्तु एषः सन्तोषः दीर्घकालं न स्थितः । अनन्तरदिने अपरः भिक्षुकः आगतवान् । सः रागप्रियस्य समीपम् आगत्य उक्तवान् - "भवतः आपणे सर्वं सम्यक् अस्ति इति श्रुतम् । मम मित्रं भिक्षुकः माम् अत्र प्रेषितवान् । भवतः गानम् अहं

शृणोमि । मह्यं भोजनं ददातु'' इति ।

''सः भिक्षुकः किमर्थं न आगतवान् ?'' इति पृष्टवान् रागप्रियः ।

''सः यद्यपि भिक्षुकः तथापि तस्य किञ्चित् सङ्गीतज्ञानम् अस्ति । अतः भवतः गानस्य श्रवणे सः नितरां कष्टम् अनुभवति । मम तु सङ्गीतज्ञानं किञ्चिदपि नास्ति । अतः अहम् अत्र आगतवान्'' इति उक्तवान् एषः भिक्षुकः ।

तावता तत्र आगता सरस्वतीनामिका तरुणी एतयोः सम्भाषणं श्रुत्वा हसितवती । एतत् दृष्ट्वा म्लानवदनः रागप्रियः तां पृष्टवान् - ''किमर्थं हसति भवती ?'' इति ।

तदा सरस्वती उक्तवती - ''पाककरण-शब्दश्रवणेन एव मम शिरोवेदना । किन्तु मम पिता सर्वदा मां वदति यत् बालिकया भवत्या पाककरणम् अवश्यं ज्ञातव्यम् इति । यदि भवादृशः मम भोजनव्यवस्थां पश्येत् तर्हि अहम् आदिनं गानं शृणुयाम् । मम स्थितिं स्मरन्त्याः मम, भिक्षुकस्य वचनस्य श्रवणात् हासः आगतः'' इति ।

''एवं तर्हि सङ्गीतज्ञानं नास्ति वा भवत्याः ?'' इति पृष्टवान् रागप्रियः ।

''कुतो न ? मम सङ्गीतज्ञानम् अस्ति एव । मम पिता श्रेष्ठः सङ्गीतविद्वान् । तस्य गानं श्रोतुं बहवः आगच्छन्ति । मम पितुः दुःखं यत् गृहम् आगतेभ्यः भोजनादिकं दातुं न शक्यते इति । मम पाके अनासक्तिः । अतः एतद्विषये मम, पितुः च मध्ये गृहे प्रतिदिनं विवादः भवति'' इति उक्तवती सरस्वती ।



''तर्हि भवती मम गानं श्रोतुं सिद्धा अस्ति । एवं ननु ?'' इति पृष्टवान् रागप्रियः ।

तदा सरस्वती उक्तवती - ''आम् ! पाककरणात् आत्मनः रक्षणार्थम् अहं हिममय्यां शय्यायां शयनं कर्तुम् अपि सिद्धा । एवं स्थिते गानश्रवणे कः क्लेशः ? स्त्रीणाम् इदं वैशिष्ट्यं भवति यत् अनिष्टात् कार्यात् आत्मनः रक्षणार्थं ताः कष्टतमम् अपि कार्यं कर्तुं सिद्धाः भवन्ति'' इति ।

''तर्हि प्रतिदिनं रात्रौ भवत्याः गृहम् आगत्य अहं पाकं करिष्यामि । भवत्या मम गानं श्रोतव्यम् । भवतु वा एतत् ?'' इति पृष्टवान् रागप्रियः ।

सरस्वती अङ्गीकारं सूचितवती । तावता

रागप्रियेण कश्चन सन्देहः प्राप्तः । सः सरस्वतीं पुनः पृष्टवान् – "श्रोतृणां भोजनव्यवस्था किमर्थं करणीया ? भोजनं न दत्तं चेत् ते न आगच्छेयुः इति वा ?" इति ।

तदा सरस्वती उक्तवती – "सङ्गीतं श्रोतुम् आगतवन्तः पित्रे उपायनरूपेण किमपि यच्छन्तिः । तादृशेभ्यः भोजनदानं योग्यं खलु ?" इति ।

एतस्य श्रवणात् रागप्रियेण ज्ञातं यत् स्वस्य, सरस्वत्याः पितुः श्रोतृणां कः भेदः इति । किन्तु तादृशभेदस्य कारणं न अन्यः, अपि तु स्वयम् एव इति तु न ज्ञातम् एव ।

भित्तिपार्श्वे स्थिता पितामही एतयोः सम्भाषणं समग्रं श्रुतवती आसीत् । यदा सा तयोः समीपम् आगता तदा सरस्वती पृष्टवती - "एषा का ?" इति ।

"एषा मम पितामही" इति पितामह्याः परिचयं कारितवान् रागप्रियः ।

"हाँ, स्मृतम् । पञ्चदशभ्यः वर्षेभ्यः पूर्वम् एषा रथयात्रायां दृष्टा आसीत् मया" इति उक्त्वा ततः निर्गन्तुम् उद्युक्ता सरस्वती ।

तदा पितामही तस्याः हस्तं गृहीत्वा - "वत्से ! तिष्ठतु तावत् । भवती सुन्दरी बुद्धिमती चापि दृश्यते । भवत्याः गृहं कुत्र ? भवत्याः पित्रा सह वार्तालापः करणीयः अस्ति मया" इति उक्तवती ।

सरस्वती पितामह्या सह स्वगृहं गतवती । पितामही तस्याः पितरं सर्वं निवेद्य - "भवत्याः पुत्री यदि मम पौत्रस्य पत्नी स्यात् तर्हि वरं भवेत् । किन्तु एका न्यूनता नाम एषा पाकं न जानाति इति" इति उक्तवती ।

"न कोऽपि हानिः तेन । भवत्याः पौत्रः श्रोत्रीम् इच्छति । मम पुत्री पाकसमर्थं पतिम् इच्छति । अतः तयोः विवाहात् उभयोः अपि समस्या परिहृता भविष्यति । परस्परसहकारेण जीविष्यतः तौ" इति वदन् विवाहविषये अङ्गीकारं प्रदर्शितवान् सरस्वत्याः पिता ।

एवं रागप्रियस्य सरस्वत्याः चापि समस्या परिहृता । तौ सुखेन दाम्पत्यजीवनं यापितवन्तौ ।



# प्रकृतिवैचित्र्याणि

## समुद्रजलं किमर्थं लवणमयम् ?



समुद्रजलं किमर्थं लवणमयं भवति ? एतस्य प्रश्नस्य उत्तररूपेण विविधाः विकल्पाः श्रूयन्ते । लवणवाहिन्यः बह्व्यः महानौकाः समुद्रे निमग्नाः इत्यतः तथा इति, वायुमेघादयः द्वेषभावनया समुद्रस्य मथनं कृतवन्तः इत्यतः तथा इति, अन्यक्रमेण च जानपदकथाः श्रूयन्ते । किन्तु वस्तुस्थितिः तु अन्या एव । विविधाभ्यः दिग्भ्यः समागताः नद्यः आत्मना सह विविधानि लवणानि खनिजानि च आनीय समुद्रेण योजयन्ति । जलं तु बाष्परूपतां प्राप्य उद्गच्छति । समुद्रतलस्थस्य लवणस्य सङ्ग्रहः वर्धते । ततः जलं लवणमयं भवति । समुद्रजलम् आलवालेन सङ्गृह्य आतपेन संशोष्य लवणम् उत्पादयन्ति जनाः लोके ।

## जलं विनापि वर्धन्ते सस्यानि



सस्यस्य वर्धनार्थं जलम् अत्यावश्यकम् एव इत्येतत् सत्यम् एव चेदपि लोके कानिचन सस्यानि तादृशानि दृश्यन्ते, यानि जलरहितायां मरुभूमौ अपि वर्धन्ते । जातिविशेषे जातानि कण्टकसस्यानि एतादृशानि । एतेषां सस्यानां निमित्तं जलं सर्वथा अनावश्यकम् इति न । किन्तु अल्पप्रमाणकेन जलेन अपि जीवन्ति एतानि । एतेषां मूलानि भूमेः अन्तः सुदूरं प्रसृतानि भवन्ति । यदा वृष्टिबिन्दवः पतन्ति तदा तानि जलं सङ्गृह्णन्ति । एतादृशानि सस्यानि जलकुण्डेषु अपि वयं वर्धयितुं शक्नुमः । जलं न दत्तं चेदपि तानि वर्धन्ते । प्रतिदिनं जलं दत्तं चेत् तु वेगेन वर्धन्ते, पुष्पितानि भवन्ति च ।

## पर्णेषु जलनाड्यः



सस्यानां पर्णेषु जलनाड्यः सुन्दरतया प्रसृताः दृश्यन्ते । एताः न केवलं सौन्दर्याय, अपि तु शरीरे रक्तनाड्यः इव सस्यस्य जीवातवे भवन्ति । मूलैः सङ्गृहीतानि द्रवरूपाणि लवणखनिजादीनि, अन्यान् पोषकांशान् च एताः सस्यस्य विविधभागान् प्रति नयन्ति । पर्णाग्रभागे तु एताः शतधा विभक्ताः दृश्यन्ते । एताः एवम् आहारांशं सर्वत्र प्रापयन्ति इत्यतः सस्यस्य पर्णानि सदा हरितवर्णेन शोभन्ते ।

# कुतः आगच्छन्ती अस्ति भवती ?

| | | |
|---|---|---|
| मालिनी – | हरिःओं, नलिनि ! कुशलं खलु ? कुतः आगच्छन्ती अस्ति भवती ? | Hello, Nalini, how are you ? Where are you coming from ? |
| नलिनी – | नगरात् आगच्छन्ती अस्मि । | I am coming from the city. |
| मा – | हां स्मृतम् । श्वः विरामः खलु भवत्याः ? | Yes, I know, you have holiday tomorrow. |
| न – | आम् । परश्वः उषसि एव इतः गमिष्यामि । भवती गृहे एव अस्ति खलु ? किमर्थम् अग्रिमाध्ययनार्थं प्रयत्नः न कृतः भवत्या ? | I will be leaving early in the morning day after tomorrow. Would you be at home ? Why didnot you go in for further studies ? |
| मा – | हुं । वयं यथा इच्छामः तथैव सर्वं न प्रचलति खलु लोके ? | Oh, nothing happens according to our plan in this world ! |
| न – | किं मातापितरौ 'अग्रिमाध्ययनं मास्तु' इति उक्तवन्तौ ? | Your parents said you need not study further ? |
| मा – | तौ तु तटस्थौ आस्ताम् । किन्तु अग्रजः एव 'मास्तु' इति उक्तवान् । | No, they didn't. Brother said it. |
| न – | किं धनसमस्या तत्र कारणम् ? | Is it the problem of finance ? |
| मा – | प्रधानं कारणं तदेव । अग्रजयोः अध्ययनार्थम् अपि तेनैव अर्थव्यवस्था करणीया । | The main reason is that. He has to find money for the education of the other two brothers also ! |
| न – | विवाहयोग्यायाः भगिन्याः अध्ययनेन किम् इत्यपि चिन्तनं स्यात् तस्य । | Or was it his view that there was no point in a sister who is about to be married continuing her studies ? |
| मा – | तदपि स्यात् कदाचित् । | It could be so. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| शब्दः | Meaning |
|---|---|
| अतिशेते - | Excels |
| अभिव्याप्य - | Having spread |
| अलम् - | Enough |
| अहोरात्रम् - | Day and night |
| आक्रमणकारः - | Invader |
| इष्टम् - | Liked |
| उत्कोचः - | Bribe |
| उदभावयत् - | Created |
| उपायनीकृतम् - | Was given as gift |
| कण्डोलः - | Basket |
| खननम् - | Digging |
| खनिजम् - | Mineral |
| चिन्वन्ति - | Choose |
| जलनाडी - | Vein-like structures in leaves |
| तुल्यता - | Equality |
| दर्पणः - | Mirror |
| द्रवीकृत्य - | Having melted |
| नवनीतम् - | Butter |
| निधाय - | Having placed |
| निरूपितः - | Determined |
| निर्दुष्टम् - | Faultless |
| प्रतीकम् - | Reflection |
| प्रमाणितम् - | Proved |
| प्राणवायुः - | Oxygen |
| बहुमतम् - | Majority |
| यथावत् - | As it is |
| वधूः - | Bride |
| वाताटः - | Kite |
| विकल्पाः - | Difference of perception |
| विजृम्भणम् - | To get expanded |
| वितानः - | Pandal |
| शलाका - | Twig |
| श्रोता - | Audience |
| सङ्कलितः - | Compiled |
| सन्दिश्य - | Having informed |
| सम्राट् - | Emperor |
| सर्वकारः - | Government |
| संविधानम् - | Constitution |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकाम् सप्टम्बर् - ९४ मासे प्रकटयिष्यामः ।


S.G. Seshagiri


S.G. Seshagiri

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलैः - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

### 'मे' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

**प्रथमचित्रम् - मातापित्रोः सतोः, सदा महान् हि मोदः ।**

**द्वितीयचित्रम् - भरणीये खलु उदरे, सदा हि महती चिन्ता ।**

प्रेषकः - सनत्कुमार उपाध्यायः, श्री शम्.अ.स.ती. संस्कृतमहाविद्यालयः, द्वारका, जामनगरम् - ३६१३३५ - गुजरात्



**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

---

